इत्यत्र श्रुतावपि । ''निर्गुणः'' इति पदं न भगवतः निर्गुणत्वं वक्ति । एक एव वेदमन्त्रः आदौ भगवतः कर्माध्यक्षत्वं सर्वभूताधिवासत्वं च उक्त्वा अन्ते गुणविशिष्टस्यैव भगवतः कथं वा निर्गुणत्वं वदेत् ? तथा च ''निर्गुण''शब्दस्य भगवान् प्राकृतसत्वरजस्तमोगुणहीनः इति अर्थविवरण-पूर्वकं श्रुतेः विरोधपरिहारः कर्तव्यः ।

निर्विशेषं वस्तु न अनुभववेद्यम् । न कोऽपि शब्दः निर्विशेषं वस्तु वदति । यत्किमपि प्रमाणं वस्तुग्रहणसन्दर्भे धर्मविशिष्टं वस्तु एव गृह्णाति । निर्धर्मकं वस्तु किमपि प्रमाणं न बोधयति ।। तस्मात् भगवान् नारायणः अनन्तगुणपरिपूर्णः दोषदूरश्च इत्येव सर्वेषां वेदवाक्यानामर्थः इति वेदार्थनिर्णयप्रकारः अत्र प्रकरणे सुष्ठु निरूपितः ।

अपि च ''वेदाः यज्ञयागादिरूपकार्यबोधकाः न ब्रह्मबोधकाः'' इति वादं सप्रमाणं सविस्तरमत्र ग्रन्थे निराकृतवन्तः आचार्याः । भगवतः सर्वशब्दवाच्यत्वं च अत्र सुष्ठु सप्रमाणं प्रतिपादितम् ।।

## सङ्कीर्णग्रन्थाः

## सदाचारस्मृतिः

भगवता नारायणेन श्रीवेदव्यासावतारे ये ये सदाचाराः निरूपिताः तेषां सदाचाराणां सङ्ग्रहात्मिका इयं कृतिः ''सदाचारस्मृतिः'' श्रीमदाचार्यैः रचिता । अत एव सदाचारस्मृतिरिति सार्थकनाम धत्ते । प्रातः शयनादुत्थानादारभ्य रात्रौ शयनं प्रति गमनपर्यन्तं साधकैः सज्जनैः अवश्यं कर्तव्याः ये ये आचाराः तेऽत्र सम्यक् प्रतिपादिताः ।

हरिस्मरणपूर्वकं अरुणोदयकाले समुत्थाय शौचदन्तधावनादीन् समाप्य, आचम्य, विध्युक्तप्रकारेण स्नायात् । स च विधिप्रकारः एवं वर्तते ।

''उद्धृतासि वराहेण'' इति मन्त्रेण समग्रशरीरं मृत्तिकया विलिप्य त्रिवारं जले अवगाह्य, ''आपो हिष्ठा'' इति मन्त्रेण शरीरं सम्प्रोक्ष्य, पुनः मृत्तिकालेपनं कृत्वा त्रिवारं जले निमज्जेत् । जले अवगाह्यैव च हरिं स्मरन् जलाशयादुपरि आगत्य शुभ्रवस्त्रं धृत्वा, गोपीचन्दनधारणपुरस्सरं गायत्र्या अभिमन्त्रितेन जलेन सूर्यार्घ्यं दत्वा, ततः सूर्यमण्डलमध्यवर्तिनं भगवन्तं ध्यायन् गायत्रीं जपेत् ।

''सहस्रपरमां देवीं शतमध्यां दशावराम्'' । इति प्रमाणानुसारेण, सूर्योदयात्प्राक् तिष्ठन्, सूर्योदयानन्तरं उपविशन् वा यथाशक्ति गायत्रीं जपेत् । सायङ्काले उपविश्यैव गायत्रीं जपेत् । जपकाले मौनमाचरेत् । गायत्र्याः त्रिगुणितं नारायणाष्टाक्षरमन्त्रं जपेत् । ततः दिग्देवताः ब्राह्मणान् गुरूंश्च प्रवन्द्य सन्ध्यां समाप्य, ब्रह्मयज्ञपुरस्सरं देवऋषि आचार्यान् तर्पयित्वा पाठप्रवचनादीनारभेत् ।

मध्याह्नकाले पुनःस्नात्वा भगवतः षोडशोपचारपूजाः तन्त्रसारोक्त-क्रममार्गेण कृत्वा, वैश्वदेववलिहरणादीनवश्यं कुर्यात् । ततः भगवतः नैवेद्यं भृत्यातिथिपुरस्सरं भुञ्जीत । ततः वेदशास्त्रचिन्तनपूर्वकं अहश्शेषं नीत्वा, सायङ्काले सूर्यास्तमयात् प्राक् सायं सन्ध्यामाचरेत् । रात्रौ प्रथमया-मानन्तरमेव शयनं कुर्यात् ।

एषु आचारेषु मध्ये वैश्वदेववलिहरणे विना अन्ये सर्वेप्याचाराः ब्रह्मचारिणां सन्यासिनां च विहिताः । ब्रह्मचारिणां 'अग्निकार्यं' विशिष्टतया विहितम् ।

सन्यासिनां तु होमादिप्रसक्तिरेव नास्ति । जपतर्पणपाठप्रवचनादिकमेव तेषां विहितम् ।

रमाब्रह्मादयो देवा अपि भगवत्परिवारतया पूज्या एव । एवं सर्वान् सदाचारान् निरूप्यान्ते श्रीमदाचार्यैः एतेषां सदाचाराणां फलं क्रोडीकृतम् ।

**"स्मर्तव्यः सततं विष्णुः विस्मर्तव्यो न जातुचित् ।**
**सर्वे विधिनिषेधाः स्युः एतयोरेव किङ्कराः"** ॥ इति ।

भगवतः स्मरणं सदा कर्तव्यं, तस्य विस्मृतिः न कदापि भवेत् । एतावत्पर्यन्तं सर्वे सदाचारा एतयोः स्मरणविस्मरणाभावयोः किङ्कराः सेवका भवन्ति । इति सदाचाराणां भगवतः स्मरणे तथा तस्य विस्मरणाभावे च पर्यवसानं कृतम् ।

विष्णुस्मरणस्यावश्यकता, भक्तेः गरिमा, कृष्णार्पणभावस्य महत्वं इत्यादिविषये भगवद्गीतामहाभारतादिस्मृतयः प्रमाणतयात्र सुष्ठु प्रयुक्ताः ॥

## कृष्णामृतमहार्णवः

कृष्णामृतमहार्णवः 'आचार' सम्बन्धी अपरो ग्रन्थः । अनेकेषु पुराणेषु विद्यमानानि महर्षीणां वाक्यानि सङ्गृह्य श्रीमदाचार्यैः हरिभक्तेः माहात्म्यं अत्र उपवर्णितम् । वैद्यनाथेश्वरेति प्रसिद्ध 'कोकड' नामकग्रामे यडपडित्तायनामकभक्तस्य प्रार्थनानुसारेण श्रीमदाचार्याः ग्रन्थमिमं रचितवन्त इति सुमध्वविजये तद्व्याख्याने च प्रथितम् ।

**क्षेत्राग्र्यं त्रिभुवनवैद्यनाथनाथं**
**प्रस्थाय प्रचुरतरान्तरप्रभावी ।**
**श्रीकृष्णामृतपरमार्णगभिधानं**
**चक्रे सद्वचनततिं स्वभक्तभूत्यै** ॥ सुमध्वविजयः, १६-४०

श्रीकृष्णाख्यस्य अमृतसमुद्रस्य स्मरणेनैव संसारविषः परिहृतो भवति । स च भक्तः अमृतत्वं च भजते ।

**''संसारविषपानेन ये मृताः प्राणिनो भुवि ।**
**अमृताय स्मृतस्तेषां कृष्णामृतमहार्णवः ॥''**

''इन्द्रियेषु सुदृढेषु सत्स्वेव भगवतः स्मरणादिकं कुर्यात् । वार्धक्ये खलु भगवदाराधनादिकम् इति विचिन्त्य भगवन्तं विस्मृत्य यौवने केवल-भोगासक्तो न भवेत् । वार्धक्ये इन्द्रियाणि दुर्बलानि भवन्ति । तदा भगव-दाराधनादिषु तानि न प्रवृत्तानि भवन्ति । तथा च भगवत्पूजादिकं यौवनेऽपि नास्ति, वार्धक्येऽपि नास्तीति जीवनमेव व्यर्थं स्यात् । अतः कालविलम्बमकृत्वा यौवने एव धार्मिकसाधनं कुर्यात्'' ।

एकः अत्याश्चर्यकरः विषयः प्रपञ्चेऽस्मिन् दृश्यते । 'नारायण' इति दिव्यमन्त्रः अस्ति । मन्त्रोच्चारणे जिह्वाऽपि अस्ति सर्वेषाम् । तथापि नारायणनामस्मरणमकृत्वा जनाः नरके पतन्ति इति यत् तदद्भुतमेव ।

**''नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी ।**
**तथापि नरके घोरे पतन्तीत्येतदद्भुतम्'' ॥**

''हृदये भगवतः रूपं, मुखे भगवतः मधुरं नाम, उदरे तस्य दिव्य-प्रसादं, मस्तके तस्य निर्माल्यं च यो धारयति तस्य अधःपतनमेव नास्ति । सदा उन्नतिरेव भवति ।''

''यथा अग्निः तूलराशिं अनायासेन भस्मीकरोति । एवमेव पश्चात्ताप-पूर्वकं कृतं गोविन्दनामस्मरणं पापपर्वतमेव क्षणार्धेन दहति'' ।

''भगवत्पूजायां वैभवः आडम्बरः नापेक्षितः । केवलजलेन दूर्वा-ङ्कुरैर्वा भक्त्या यदि भगवान् पूज्यते । तां पूजां नारायणः सन्तोषेण स्वीकरोति । भक्तियुक्तया तया पूजया सन्तुष्टः अतिशयितफलं प्रयच्छति । यः भगवन्तमनाराध्य मोक्षं प्राप्तुं इच्छति, सः तरणसामग्रीं विनैव

केवलहस्ताभ्यां समुद्रं तर्तुमिच्छति । भगवदाराधनेनैव मोक्षः लभ्यः । नान्येन । स एव मोक्षदाता । अतः मोक्षार्थिभिस्सर्वैरपि भक्त्या भगवदाराधनं कर्तव्यमेव ।''

एवं अनेकपुराणवाक्योदाहरणपूर्वकं, हरिभक्तिं विना आध्यात्मिकसाधनं न भवेत् । अत्यन्तसुलभमार्गः भक्तिमार्गः । अनेनैव मार्गेण प्रभूतं फलं प्राप्तुं शक्यते । इत्यादयः अनेके विषयाः हृदयङ्गमतया यथा मनसः परिणामः स्यात् तथा ग्रन्थेऽस्मिन् आचार्यैः निरूपिताः ।

अपि च अस्मिन् ग्रन्थे एकादशीव्रतस्य माहात्म्यं विशेषतया प्रतिपादितं श्रीमदाचार्यैः ।

**''रटन्तीह पुराणानि भूयो भूयो वरानने ।**
**न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ।।''**

एकादशीदिवसे किमपि न भोक्तव्यम् इति पुराणानि घण्टाघोषेण वर्णयन्ति । इति आचार्यैः स्पष्टतया प्रतिपादितम् । यस्तु एकादशी-व्रतासक्तो भवति सः सकलभोगपदार्थपरित्यागपूर्वकं भगवतः सेवारूप-साधने सिद्धिं प्राप्नोति । तादृशमहत्साधनं प्रति प्रथमसोपानं भवति एकादशीव्रतम् । अतः सर्वैरपि वैष्णवैः व्रतमिदं अवश्यं करणीयमिति श्रीमदाचार्यैः आज्ञा दत्ता । सा च आज्ञा इदानीं प्रायः सर्वैरपि माध्वैः परिपाल्यते ।

ज्योतिर्विज्ञाने परिणतानां विदुषां साहाय्येन, एकदशीतिथिं सम्यक् निर्णीय, दशमीविद्धां एकादशीं परित्यज्य शुद्धैकादशीमेवाचरेत् । इदं च एकादशीव्रतं न केवलं ब्राह्मणैः किन्तु सर्वैरपि वैष्णवैः अनुष्ठेयम् । विष्णुभक्तिः, विष्णुदीक्षा, विष्णुव्रतानि न केवलं ब्राह्मणानां विहितानि किन्तु सर्वेषां वैष्णवानां विहितानीति आचार्यैः स्पष्टं उद्घोषितम् ।

''ऊर्ध्वपुण्ड्रं ऋजुं सौम्यं ललाटे यस्य विद्यते ।
स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः ॥''

ऊर्ध्वपुण्ड्रगोपीचन्दनधारी यः विष्णुभक्तः स चण्डालोऽपि गौरवार्हः इति विष्णुभक्तेः महिमा उद्घोषितः ।

एवं श्रीकृष्णामृतमहार्णवे एकादशीव्रतगोपीचन्दनधारणेत्यादिद्वारा हरिभक्तेः नानाप्रकाराः भक्तानां अभ्युदयाय आचार्यैः निरूपिताः । अर्चनम्, स्मरणम्, ध्यानम्, कीर्तनम्, कथनम्, श्रवणम्, इत्यादिभिः प्रसन्नः भगवान्नारायणः मोक्षं ददातीति च स्पष्टं प्रतिपादितम् ।

## तन्त्रसारसङ्ग्रहः

तन्त्रशास्त्रस्य लक्षणं प्राचीनैः एवं निरूपितम् ।

**''तनोति विपुलानर्थान् तत्त्वमन्त्रसमन्वितान् ।**
**त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते ॥''**

-विष्णुसंहिता, २.१०

स्वतः श्रीमदाचार्या एव तन्त्रशब्दार्थं एवं निरूपितवन्तः–

**''तनुते येन कार्यं तत् तन्त्रं साधनमुच्यते ।**
**कारणानां स्वशक्तिर्वा प्रधानं साधनं यतः''** ॥

इति ब्रह्मतर्के । (भागवततात्पर्यम् ३.७.३)

**''ततिः प्रकाशो विस्तारः तन्त्रश्चेत्यभिधीयते ।''**

इति तन्त्रमालायाम् । (भागवततात्पर्यम् ३.३४.५)

अमरैः आश्रितछायं कल्पवृक्षं प्राप्य यथा पुरुषः को वा पर्याप्त-वञ्छितः न स्यात् । तथा तन्त्रसारं सम्प्राप्य को वा साधकः पर्याप्त-

वाञ्छितः न स्यात् ? सम्प्राप्तसकलाभीष्टः भवत्येवेति सुमध्वविजये तन्त्रसारसङ्ग्रहस्य महिमा प्रतिपादितः ।

**''कस्तन्त्रसारं सम्प्राप्य न स्यात् पर्याप्तवाञ्छितः ।**
**अमरैराश्रितछायं कल्पद्रुममिवोत्तमम् ।।''** -सुमध्वविजयः १५-७८

अयं तन्त्रसारसङ्ग्रहः ''तन्त्रसार'' इति प्रसिद्धस्य महाविष्णुकृतस्य मूल-ग्रन्थस्य सङ्ग्रहरूपः । मूलतन्त्रसारस्य श्लोकाः श्रीमदाचार्यैः भागवत-तात्पर्यादिग्रन्थेषु प्रमाणत्वेनोदाहृताः । तस्य च मूलग्रन्थस्य सारसर्वस्वं अत्र सङ्गृहीतम् ।

यस्य तन्त्रस्य आचरणाभावे कर्मलोपरूपः प्रत्यवायः भवति । तादृशमूलतन्त्रस्वरूपमत्रनिरूपितम् । ग्रन्थस्यास्य पठनपाठनादिकं अध्ययनं अध्यापनं सकलमपि सकलाभीष्टदायकम् इति आचार्यैः ग्रन्थे एव स्पष्टीकृतम् ।

**''ग्रन्थोऽयं पाठमात्रेण सकलाभीष्टसिद्धिदः ।**
**किमुज्ञानादनुष्ठानात् उभयस्मात् पुनः किमु ।।**
**तन्त्रमार्गास्तु हरिणा ह्यसङ्ख्याः कीर्तिता अपि ।**
**तेष्वयं सुगमो मार्गः सुफलश्चानुतिष्ठताम् ।।**
**यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते ।**
**तावत् समस्तं कथितं ह्यस्मिंस्तन्त्रे यथाविधि ।।**
**प्रीयतेऽनेन मार्गेण पूजितो मुक्तिदो भवेत् ।**
**कामदश्च स्वभक्तानां भगवान् पुरुषोत्तमः ।।''** इति ।

सृष्टेः आदौ महाविष्णुः चतुर्मुखब्रह्माणं प्रति कृतस्य उपदेशस्य सार एव तन्त्रसारः । तस्य सङ्ग्रहः ''तन्त्रसारसङ्ग्रहः'' ।

सन्ति च तन्त्रसारसङ्ग्रहे चत्वारः अध्यायाः ।

तत्र प्रथमाध्याये–

प्रणवलक्षणम्, प्रणवस्य अष्टाक्षरैः प्रतिपाद्यानां भगवन्मूर्तीनां विवरणम्, मातृकामूर्तयः, अष्टमहामन्त्राः तेषां महत्वं च, देवपूजाविधानम्, विशेषतः पीठपूजा–आवरणपूजयोः विधानम्, देवपूजामाहात्म्यम् इत्यादयो विषयाः निरूपिताः ।

द्वितीयाध्याये–

मातृकान्यासक्रमः, प्राणायामः, पापपुरुषविसर्जनक्रमः, कलशदेवताः, कलशपूजाविधानम्, होमस्य विधिविधानानि, होमद्रव्यविवरणम् इत्यादयो विषयाः निरूपिताः ।

तृतीयाध्याये–

अत्र प्रधानतया देवताप्रतिष्ठायाः विधिविधानानि उच्यन्ते । प्रथमतया प्रतिमालक्षणम्, प्रतिमानिर्माणविधिः, शिलापरीक्षाविधिः, शिलाप्रभेदाः, भूसंशोधनविधिः, देवालयनिर्माणयोग्यस्थलविचारः, गर्भगृहादीनां निर्माणे प्रमाणानि, वास्तुपूजाविधिः, मण्टपरचनाविधानम्, अङ्कुरार्पणविधिः, बलिदानविधिः, अधिवासनविधिः, चक्राब्जभद्रकमण्डलयोर्लक्षणम्, कलशाभिषेकक्रमः, अभिषेकमन्त्राः, अभिषेकविधिः, अन्नसन्तर्पणम्, अतिथिपूजाविधानम्, जीर्णोद्धारविधिः, सम्प्रोक्षणविधिः, दुर्गादीतर-देवताप्रतिष्ठाविधिः, तत्वाभिमानिदेवताविचारः, तत्वन्यासक्रमः इत्यादि-विषयानधिकृत्य समग्रविवरणमत्राध्याये प्रदत्तमस्ति ।

चतुर्थाध्यायः विधविधमन्त्रनिरूपणायैव प्रवृत्तः । अत एव तस्य मन्त्राध्याय इत्यपि नाम प्रसिद्धम् ।

तत्र विविधवराहमन्त्राः, श्रीकराष्टाक्षरमन्त्रः, नरसिंहमन्त्राः, हंस-मन्त्राः, दधिवामनमन्त्रः, वामनमन्त्रः, त्रिविक्रमगायत्रीमन्त्रः, राममन्त्रः,

परशुराममन्त्रः, कृष्णमन्त्रः, वेदव्यासमन्त्रः, हयग्रीवमन्त्रः, कपिलमन्त्रः, दत्तात्रेयमन्त्रः, वैदिकविष्णुमन्त्राः, लक्ष्मीमन्त्राः, ब्रह्मवाय्वोः, सरस्वती-भारत्योः मन्त्राः शिवपार्वत्योः मन्त्राः, शेषमन्त्रः, गरुडमन्त्राः, दिक्-पालकमन्त्राः, सूर्यमन्त्रः, गणेशमन्त्रः, तथा धन्वन्तरिमन्त्रः, एते मन्त्राः अध्यायेऽस्मिन् निरूपिताः ।

प्रतिमन्त्रं ध्येयमूर्तीनां विवरणम्, अङ्गन्यासकरन्यासानां विधि-विधानानि, ध्यानमन्त्राश्च निर्दिष्टतया प्रतिपादिताः ।

मन्त्रविवरणानन्तरं तर्पणविधिः, होमविधिः, होमद्रव्याणि, ध्येय-मूर्तीनां बाहुसङ्ख्याः, तासां आयुधादिविवरणम्, ध्यानविशेषाः, मन्त्राणां फलश्रुतिः, यन्त्रोद्धारक्रमः, गुरुलक्षणम्, प्राणायामादियोगाङ्गानि, सुषुम्नानाडीविचारः, इत्यादयः विषयाः अध्यायेऽस्मिन् निरूपिता वर्तन्ते ।

एवं तन्त्रसारसङ्ग्रहः तन्त्रशास्त्रस्य विश्वकोशः इति वक्तुं शक्यते । मन्त्राणां फलविषये नीमदाचार्यैः तत्र तत्र एवमुद्घोषितः निखिलेष्ट-प्रदायकः; अशेषदोषदहनः, तत्वज्ञानप्रदायकः, निश्शेषपुरुषार्थदः, एते विजयदा मन्त्राः ज्ञानमोक्षप्रदायकाः, सर्वेष्टचिन्तामणिः, वादे विजयदः, सर्वविद्याप्रदः, प्रतिवादिजयप्रदः, हरितुष्टिदम्, सर्वेरोगा विनश्यन्ति । इत्यादि ।

वीर्यवत्तराण्येव मन्त्राणि अत्रोदाहृतानि, कलियुगे वेदव्यासकृष्णादि-मन्त्राः अतिशीघ्रफलप्रदा इत्यपि श्रीमदाचार्यैः प्रतिज्ञातम् ।

‘‘दृष्टार्थ एव मन्त्राणां कलौ वीर्यं तिरस्कृतम् ।
तत्राप्युद्दीप्तवीर्या हि मन्त्रा ह्यत्र प्रकीर्तिताः ॥
वासिष्ठवृष्णिप्रवराः कलौ तत्रापि वीर्यदाः ॥ (४-४२)

## यतिप्रणवकल्पः

यतिप्रणवकल्पे प्रधानतया सन्यासस्वीकारस्य विधिविधानानि सन्यासिधर्माः, तेषां कर्तव्यानि, भगवध्यानक्रमाश्च निरूप्यन्ते ।

संसारे विरक्तः साधकः पुरुषसूक्तेन विध्युक्तप्रकारेण हुत्वा स्वाश्रितानां सर्वेषां जीवनमार्गं परिकल्प्य, तेषामभयं दत्वा, भगवन्तं नारायणं ध्यायन् सन्यासाश्रमं स्वीकुर्यात् ।

**''समिच्चर्वादिकान् हुत्वा सम्यक् पुरुषसूक्ततः ।**
**सर्वेषामभयं दत्वा विरक्तः प्रव्रजेद्धरिम् ॥''**

'सन्यासदीक्षां विहितगुरुणा एव स्वीकुर्यात् । स च गुरुः भगवद्भक्तः सदाचारसम्पन्नश्च भवेत् । तस्य समीपं गत्वा ''मे ब्रह्मतत्वं उपदिश'' इति प्रार्थयेत् । स च गुरुः शिष्यप्रार्थनानुसारेण तस्य दक्षिणकर्णे प्रणवमन्त्रं त्रिवारं उपदिशेत् । प्रणवमन्त्रस्य अन्तर्यामी ऋषिः, गायत्री छन्दः परमात्मा देवता च ।'

'प्रणवान्तर्गतानां अकारोकारमकारनादानां अक्षराणां, विश्वतैजसप्राज्ञतुरीयनामकानि भगवद्रूपाणि देवताः । कृष्णरामनृसिंहवराहविष्णुपरञ्ज्योतिपरब्रह्मवासुदेवनामकानि अष्ट भगवद्रूपाणि, प्रणवान्तर्गताकाराद्यतिशान्तैः अष्टसङ्ख्याकैः अक्षरैः प्रतिपाद्यानि ।'

'परिव्राजकः, स्वहृदयमध्ये अष्टदलं कमलं वर्तते । तन्मध्ये सूर्यचन्द्राग्निमण्डलानि विद्यन्ते । तन्मध्ये पुनरेकम् अष्टदलपद्मं विद्यते इति विचिन्त्य, तस्मिन् अष्टदलपद्मे विद्यमानां नारायणं ध्यायेत्' ।

**''अष्टपत्रे तु हृत्पद्ममध्ये सूर्येन्दुवह्निगम् ।**
**पीठं तन्मध्यपद्मस्थं नारायणमनामयम्''** ॥

एवमेव वराभयहस्तयुक्तानि विश्वादिचतूरूपाणि, कृष्णाद्यष्टरूपाणि च चिन्तयेत् ।

एवं गुरुणा ध्यानोपदेशं प्राप्तः शिष्यः त्रिवारं प्रतिज्ञां कुर्यात् स च प्रतिज्ञाक्रमः एवं वर्तते–

''विष्णुवैष्णवपरित्यागं न कदापि करोमि । इतरदेवैस्सह विष्णोः ऐक्यं वा साम्यं वा न कदापि चिन्तयामि । प्राणगमनसन्दर्भेऽपि जीव-ब्रह्मैक्यवादिभिः साम्यवादिभिर्वा सार्धं मैत्रीं न करोमि । विष्णुवैष्णव-निन्दकेभ्यः न कदापि स्नेहहस्तं ददामि'' इति ।

एवं प्रतिज्ञाविधिस्वीकारानन्तरं गुरुः शिष्यस्य शिरसोपरि हस्तं निक्षिप्य, ''सुखी भव । संसारसागरात् मुक्तो भव । मोक्षं प्राप्नुहि । मुक्तावपि हरिभक्तासु देवतासु तारतम्यक्रमेणैन भक्तिं कुरु । सर्वदा विष्णुसर्वोत्तमत्वमेव चिन्तय । जीवब्रह्मणोः ऐक्यं साम्यं वा मुक्तावपि न चिन्तय'' इति आशीर्वचनपूर्वकं शिष्यमनुगृह्य तं प्रति शास्त्रपाठं वदेत् ।

सन्यासी, प्रतिदिनं देवपूजां, जपध्यानादिकं च कुर्यात् । त्रि-सहस्राधिकसङ्ख्याकः प्रणवमन्त्रजपः उत्तमकल्पः । त्रिसन्ध्यं त्रिसहस्र-सङ्ख्याकः जपः मध्यमकल्पः । सहस्रसङ्ख्याकः जपः अधमकल्पः ।

**''नित्यतश्च हरेः पूजा जपध्यानसमर्पणम् ।**
**कर्तव्यं तु त्वया वत्स जपश्च त्रिसहस्रकः ॥**
**मध्यमः प्रणवस्योक्तौ योऽवरः स सहस्रकः ।**
**त्रिसहस्रात्परो यस्तु स उत्तमजपः स्मृतः ॥''**

''भगवान् नारायणः विम्बः, अहन्तु तस्य प्रतिबिम्बः इति बिम्ब-प्रतिबिम्बभावं चिन्तयन्, मानसपुष्पैः प्रणवमन्त्रेण च नारायणं भक्तियुक्तः

जितेन्द्रियश्च सन् आराधयेत् । प्रणवेन सार्धं इतरान् वैष्णवमन्त्रानपि जपेत्। सदा वेदार्थचिन्तने मग्नो भूयात् । वैष्णवशास्त्रश्रवणमननादिकं सदा कार्यम् । उपनिषत्सहितान् वेदान् श्रुत्वा, तेषां अर्थान् ब्रह्मसूत्रैः निर्णीय, विष्णुसर्वोत्तमत्वज्ञानं प्राप्य, विष्णोः सर्वोत्तमत्वमेव सर्वदा प्रतिपादयेत् । इतिहासपुराणपञ्चरात्रादीनां अध्ययनमपि सन्यासिना अवश्यं कार्यम् ।'' इति गुरुः शिष्यमुपदिशेत् ।

''आत्मानं प्रतिविम्वत्वे ध्यायन् विम्वं जनार्दनम् ।
ध्यायंश्च सततं वत्स सपर्यां नित्यशः कुरु ॥
मानसैर्वाथ पुष्पैर्वा प्रणवेन समाहितः ।
अन्यांश्च वैष्णवान् मन्त्रान् जपेथाः भक्तिपूर्वकम् ॥
शृणुष्व वैष्णवं शास्त्रं सदा वेदार्थतत्परः ।
वेदान् मन्त्रानुपनिपत्सहितान् सर्वदा शृणु ॥
इतिहासपुराणे च पञ्चरात्रं तथैव च ।
तदर्थान् ब्रह्मसूत्रैश्च सम्यङ्निर्णीय तत्वतः ।
विष्णोः सर्वोत्तमत्वं च सर्वदा प्रतिपादय'' ॥

एवं श्रीमन्मध्वांचार्याः सन्यासिनां कृते एव प्रत्येकं ग्रन्थं निर्माय तत्र सन्यासिधर्मान् सम्यक् निरूप्य, इतराश्रमिणां साधकानामपि सन्मार्गं प्रदर्शितवन्त इति तेभ्यः नमांसि भूयांसि समर्पये ॥

## जयन्तीनिर्णयः

रोहिण्यामर्धरात्रे तु यदा कालाष्टमी भवेत् ।
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी ॥
यस्यां जातो हरिः साक्षात् निशीथे भगवानजः ।
तस्मात्तद्दिनमत्यन्तं पुण्यं पापहरं शुभम् ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यैः विरचितः ''जयन्तीनिर्णय''नामक-ग्रन्थः श्रीकृष्णजयन्तीव्रतस्य विधानं सम्यक् वोधयति ।

श्रावणमासे (सिंहमासे) कृष्णपक्षे अष्टम्यां तिथौ मध्यरात्रौ यदा रोहिणीनक्षत्रस्य योगो भवति सा कृष्णजन्माष्टमी जयन्ती इति उच्यते । सः कृष्णावतारस्य पवित्रदिवसः । एतच्च जयन्तीव्रतं सकलविधपाप-नाशकम् । एतत्समानव्रतमन्यन्नास्ति । तस्मिन् दिने सर्वैरपि उपोषितव्यम् । तत्रापि ब्राह्मणानां विशेषव्रतमिदम् । तस्मिन् दिने आहारस्वीकारः अतिपापकरः । उपवासः अतिपुण्यकरः ।

तस्मिन् दिने त्रिसन्ध्यं– ''योगाय योगपतये योगेश्वराय योगसम्भवाय श्रीगोविन्दाय नमो नमः'' इति मन्त्रेण स्नात्वा नित्याह्निकं कुर्यात् ।

तस्यां रात्रौ– ''यज्ञाय यज्ञपतये यज्ञेश्वराय यज्ञसम्भवाय श्रीगोविन्दाय नमो नमः'' । इति मन्त्रेण श्रीकृष्णं विशेषतः पूजयेत् । ततः तारतम्यानुसारेण बलरामं, वसुदेवं, देवकीं, नन्दगोपं, यशोदां, सुभद्रां च प्रपूजयेत् ।

भगवतः सपरिवारस्य पूजानन्तरं कृष्णं प्रति अर्घ्यं दद्यात् । चन्द्रं प्रत्यपि चन्द्रार्घ्यं दत्वा नमस्कुर्यात् । ततः ब्रह्मचर्यं परिपालयन् ''विश्वाय विश्वपतये विश्वेश्वराय विश्वसम्भवाय श्रीगोविन्दाय नमो नमः'' इति मन्त्रोच्चारपुरस्सरं स्वापं कुर्यात् ।

ततः परेद्युः नित्याह्निकं समाप्य यथाशक्ति दानदक्षिणादिकं दत्वा ''सर्वाय सर्वपतये सर्वेश्वराय सर्वसम्भवाय श्री गोविन्दाय नमो नमः'' । इति मन्त्रमुच्चार्य स्वस्वसम्प्रदायानुसारेण पारणं कुर्यात् ।

ततः ''धर्माय धर्मपतये धर्मेश्वराय धर्मसम्भवाय श्रीगोविन्दाय नमो नमः'' । इति मन्त्रेण व्रतसमाप्तिं कुर्यात् ।

एवं ''कृष्णामृतमहार्णवे'' एकादशीव्रतस्य माहात्म्यं, ''श्रीकृष्णजयन्तीनिर्णये'' श्रीकृष्णजयन्तीव्रतस्य माहात्म्यं च वर्णयन्तः आचार्याः उभयोः व्रतयोः अत्यावश्यकतां उपदिष्टवन्तः ।

न केवलं ब्राह्मणानां कृते व्रतोपदेशः किन्तु विष्णुभक्तिमतां सर्वेषां वैष्णवानां कृते इति मन्तव्यम् ।

यदा अष्टम्यां रात्रौ रोहिणीयोगः न भवति । तदा ''श्रीकृष्णजयन्ती'' न भवति किन्तु ''श्रीकृष्णजन्माष्टमी'' इत्येव व्रताचरणं कर्तव्यम् ॥

## नखस्तुतिः

श्रीमदाचार्यविरचितेषु सर्वमूलग्रन्थेषु द्वौ ग्रन्थौ स्तोत्ररूपौ । तत्रैकं द्वादशस्तोत्रं, अन्या नखस्तुतिः ।

भगवतः नारायणावतारस्य नरसिंहस्य नखानां वर्णनमत्र विद्यते इति हेतोः नरसिंहनखस्तुतिः इत्यपि नाम स्तोत्रस्यास्य प्रसिद्धम् ।

गुरोः वायोः अवतारत्रयरूपं विशेषमहिमानं दृष्ट्वा भक्तिभावेन हनुमभीममध्वानां महिमानं वर्णयत् वायुस्तुतिनामकं स्तोत्रं शिष्येण श्रीत्रिविक्रमपण्डिताचार्येण रचितम् । तत् स्तोत्रं दृष्ट्वा सन्तुष्टाः श्रीमदाचार्याः ''एकैकश्लोकस्य एकैकाभीष्टप्रदत्वरूपं वरं दत्वा, विष्णुस्तुतिं विना केवलामात्मस्तुतिं असहमानाः सर्वानिष्टनिवर्तकश्रीनृसिंहस्तुतिप्रतिपादकं श्लोकद्वयं विरचय्य ददुः'' । अत एव वायुस्तुतेः आदावन्ते च नखस्तुतिपारायणसम्प्रदायः अद्यापि दृश्यते ।

अत्र श्लोकद्वयात्मके स्तोत्रे, गम्भीरया शैल्या, हृदयङ्गमतया भगवतः तथा नरसिंहावतारे हिरण्यकशिपोः मरणकारणीभूतनखानां च स्तुतिः आचार्यैः शिष्याणां उपदेशार्थं विरचिता ।

''लक्ष्मीपते: श्रीहरे: सकाशात् उत्तमं वस्तु जगति कुत्रापि नोपलभ्यते। मधुर-आम्ल-लवण-कटु-कषाय-तिक्तभेदेन षड्रसाः प्रसिद्धाः। एते रसाः सर्वैरप्यनुभूयन्ते। सप्तमः रसः न केनाप्यनुभूयते, अतः एव नास्ति। अष्टमरसस्तु सुतरां नास्त्येव। इति अनुभवसिद्धोऽयं विषयः। यथा अष्टमः रसः नास्ति तथा भगवतः समानः न कोऽपि विद्यते। भगवतः उत्तमस्तु नास्त्येव। ब्रह्मादयः सर्वेऽपि जीवाः भगवदधीनाः। मदभरिताः ये गजाः, तत्सदृशाः ये दैत्याः तेषां मर्दने समर्थः यः नरसिंहः, तस्य वज्रसदृशाः ये नखाः तेषां नखानां प्रकाशेन नष्टं यत् देवानां कष्टरूपं तमः, तेन च तमसः नाशेन कष्टरहिताः देवाः शान्तमनस्का भूत्वा, प्रकाग्रमनसा भगवतः नरसिंहस्य नखान् ध्यायन्ति तादृशनखवान् नरसिंहः'' इति भगवतः नरसिंहस्य तन्नखानां च महिमा अत्र श्लोकद्वये श्रीमदाचार्यैः निरूपितः।

द्वितीयश्लोके भगवतः नखानां वर्णनं नास्ति। किन्तु भगवानेव वर्णितः। तथापि भगवतः तदवयवानां च भेदाभावात् ''नखस्तुतिः'' इति स्तोत्रस्य नाम युज्यते। भगवन्महिमावर्णनमपि नखवर्णनमेव, इति।

अत्र पान्त्वस्मान् इति प्रथमश्लोके पूर्वार्धः शार्दूलविक्रीडितवृत्तयुक्तः। उत्तरार्धः स्रग्धरावृत्तयुक्तः, एवं एकस्मिन्नेव श्लोके वृत्तद्वयप्रयोगः द्वयोः छन्दसोः विचित्रसंयोजनं काव्यसम्प्रदायविरुद्धमिति भाति। तथापि श्लोकप्रतिपाद्ये नरसिंहावतारे एव विचित्रसंयोजनं वर्तते। कण्ठादूर्ध्वं सिंहः। कण्ठादधः नरः। एवं नरसिंहस्य भगवतः सिंहनररूपविचित्रसंयोजनस्य सद्भावात् तत्सूचनायैव नरसिंहमहिमावर्णनश्लोकेऽपि विभिन्नछन्दसोः विचित्रसंयोजनं कृतमिति नात्र काव्यसम्प्रदायविरोधः शङ्कनीयः॥

# द्वादशस्तोत्रम्

श्रीमदाचार्याः द्वादशसङ्ख्याकैः स्तोत्रैः भगवन्तं नारायणं भक्त्या गानपुरस्सरं प्रस्तुत्य तं भगवन्तं तोषितवन्तः । तेषां द्वादशसङ्ख्याकानां स्तोत्राणां समूह एव ''द्वादशस्तोत्रं'' इति नाम्ना प्रसिद्धः । अस्मिन् स्तोत्रसमूहे विद्यमानानां स्तोत्राणां अध्यायाः इत्यपि व्यवहारः प्रसिद्धः । द्वादशस्तोत्रे प्रथमं स्तोत्रं, द्वादशस्तोत्रे द्वितीयं स्तोत्रं इति व्यवहारवत्, द्वादशस्तोत्रे प्रथमोऽध्यायः, द्वादशस्तोत्रे द्वितीयाध्यायः तृतीयाध्यायः, इत्यपि व्यवहारः प्रसिद्धः ।

अस्य स्तोत्रस्य रचनाविषये प्रथिता कथा एवं वर्तते– ''श्रीमदाचार्याः स्वशिष्यैः सार्धं एकदा समुद्रतीरं गतवन्तः । गमनसमये भगवतः महिमावर्णनरूपं द्वादशस्तोत्रं नूतनतया विरचय्य गीतवन्तः । यदा पञ्चसङ्ख्याकाः अध्यायाः समाप्ताः तदा समुद्रतीरं प्राप्ताः । तदा द्वारकानगरात् नौद्वारा आगतं रुक्मिणीपतिं गोपालकृष्णविग्रहं प्राप्य षष्ठाध्यायादारभ्य पुनः द्वादशस्तोत्रेण गायन्तः यदा रौप्यपीठपुरं प्रति भगवन्तमानयामासुः तदा द्वादशाध्यायाः समाप्ताः'' इति ।

ततः शुचिप्रतिष्ठया भगवन्तं श्रीकृष्णं उडुपीक्षेत्रे प्रतिष्ठापयामासुः ''श्रीमदाचार्याणां ग्रन्थवाहकः वृषभः सदा आचार्याणां पुरत एव तिष्ठति स्म । यदा शिष्याः मात्सर्येण तस्य वृषभस्योपरि विषप्राशनप्रयोगं कृतवन्तः तदा आचार्याः द्वादशस्तोत्रोच्चारणपूर्वकं जलं (तीर्थं) प्रोक्ष्य तं वृषभं जीवयामासुः'' इत्यपि कथा प्रथिता वर्तते ।

अत एव द्वादशस्तोत्रं विषहरमन्त्रः इति भावेन भगवतः नैवेद्यसमर्पणसन्दर्भे अन्नगतदोषनिवृत्यर्थं द्वादशस्तोत्रपारायणसम्प्रदायः अद्यापि सर्वेषु माध्वेषु दृश्यते ।

द्वादशस्तोत्रे भक्तिमाधुर्येण साकं कवितासौन्दर्यमपि दृश्यते । सङ्गीत-साहित्ययोः सुन्दरं सम्मेलनमत्र दरीदृश्यते । अस्मात् स्तोत्रात् विविधायामेषु अपूर्वाणां नूतनानां अर्थानां प्रवाह एव प्रवहति । एतादृशं स्तोत्रं संस्कृतसाहित्ये अन्यत्रास्तीत्युक्ते नातिशयोक्तिः । अत्यन्तसरलपदैः अनायासतया सुन्दरार्थबोधकत्वं अस्य स्तोत्रस्य विद्यते । अनेकवारं अर्थानुसन्धानपूर्वकाध्ययनेऽपि पुनरध्ययने नूतना अर्थाः प्रतिभासन्ते इत्येव ग्रन्थस्यास्य वैशिष्ट्यम् । विष्णुसहस्रनामस्तु विद्यमानानि अनेकानि नामानि अस्मिन् स्तोत्रे ओतप्रोतन्यायेन सम्बद्धानि । अत एव सर्वमूल-ग्रन्थाध्येतॄणां भगवन्नामार्थचिन्तनपूर्वकं भगवत्तत्वज्ञानाय इदं स्तोत्रं बहूपयोगि भवति । सिद्धान्तग्रन्थाध्येतॄन् अध्ययने प्रेरयति । सर्वेषां साधकानां मनः आकृष्य, संस्कृतसंस्कृति–सङ्गीत–तत्वचिन्तनानां रस-प्रापकशक्तिः स्तोत्रेऽस्मिन् दृश्यते । यथा विष्णुसहस्रनाम्ना भगवतः अर्चनं विहितम् । एवमेव भगवतः नैवेद्यसमर्पणं द्वादशस्तोत्रपठनपूर्वकं इति विहितम् । नैवेद्यसमये द्वादशस्तोत्रपारायणेन न केवलं नैवेद्यपदार्थेषु स्थितः विषः नश्यति, किन्तु पारायणकर्तॄणां मनसि स्थिताः काम-क्रोधादिरूपविषा अपि नश्यन्ति ।

श्रीमदानन्दतीर्थभगवत्पादैरेव ग्रन्थस्यास्य महिमा एवमुद्घोषितः– ''द्वादशस्तोत्रमिदं ज्ञानदायकम्, भक्तिकारकम्, सिद्धिदायकम्, मोक्षप्रापकं च, एतादृशमहिमोपेतः अमोघोऽयं ग्रन्थः । अस्याः कृतेः पारायणा-द्यनुष्ठानात् सकलानिष्टनिवृत्तिद्वारा सकलाभीष्टप्राप्तिः सञ्जायते'' इति ॥

स्तोत्रेऽस्मिन् विद्यमानानां द्वादशसङ्ख्याकानां अध्यायानां विषयाः संक्षेपेण एवं सङ्गृहीतुं शक्यन्ते–

प्रथमाध्याये– पादादिशिरःपर्यन्तं विद्यमानानां भगवदवयवानां स्वरूपं, सामर्थ्यम्, भक्तानुग्राहकत्वं, तेषां अवयवानां चिदानन्दरूपत्वं भगवता अभिन्नत्वं च मनोज्ञतया उपवर्णितम् ।

द्वितीये अध्याये– भगवतः सृष्टिस्थितिसंहारकत्वं, तस्य स्वातन्त्र्यं उपवर्ण्य, भक्तजनसमुद्रस्य भगवान् चन्द्र इव हर्षोत्पादकः इत्युक्तम् ।

तृतीये अध्याये–

''कुरु भुङ्क्ष च कर्म निजं नियतं हरिपादविनम्रधिया सततम्'' इत्यारभ्य जीवनस्य सन्देश एव आचार्यैरुपदिष्टः । स्वस्वविहितं कर्म सर्वैरपि कर्तव्यमेव । कर्तव्यानुगुणं फलमपि भोक्तव्यमेव । किन्तु कर्मकरणसमये फलभोगसमये च स्वस्य अस्वातन्त्र्यं भगवतः स्वातन्त्र्यं च सर्वदा चिन्तनीयम् । जगति भगवानेव सर्वज्ञः, स एव गुरुः स एव माता स एव पिता स एव सकलाभीष्टदायकः इति भगवच्चिन्तनं सदा कार्यं ''तदलं बहुलोकविचिन्तनया प्रवणं कुरु मानसमीशपदे'' अनावश्यकान् लौकिकविचारान् परित्यज्य भगवति एव मनःप्रवणं कुर्यात् इति साधनमार्गः सम्यगुपदिष्टः ।

चतुर्थे अध्याये–

भगवान् आनन्दस्वरूपी ज्ञानमयश्च इति प्रतिपाद्य, वयं निद्रासमये एव स्वरूपानन्दं अनुभवामः जाग्रदवस्थायां भौतिकमानन्दं अनुभवामः । भगवांस्तु सदा अप्राकृतानन्दमेवानुभवति । भौतिकसुखस्पर्शः तस्य नास्त्येव सः केवलाप्राकृतानन्दरूपी इति समर्थितम् ।

पञ्चमे अध्याये–

प्रासवद्धतया, सङ्गीतगानानुगुणशैल्या, भगवतः वासुदेवादि- एकादश-रूपाणां वर्णनपूर्वकं भगवन्महिमा उपवर्णितः ।

षष्ठे अध्याये–

भगवतः मत्स्यकूर्मादिदशावतारवर्णनपूर्वकं श्रीकृष्णस्य विशेषस्तुतिः तत्र प्रस्तुता ।

सप्तमे अध्याये–

जगन्मातुः महालक्ष्म्याः विशेषवर्णनपूर्वकं, जडप्रकृत्यभिमानिनी सा विश्वस्थितिप्रलयसर्गाणां कारणीभूता ब्रह्मरुद्रादिदेवाः तदधीनाः । विश्वव्यापारस्य शक्तिदात्री, ब्रह्मादीनां नियन्त्री । तथापि तस्या अपि नियन्ता हरिः इति भगवतः लक्ष्म्याः उत्तमत्वं सर्वोत्तमत्वं च प्रतिपादितम् ।

अष्टमे अध्याये–

''समग्रदेवतासमूहस्य शोभाप्रदातारं देवदेवोत्तमं भगवन्तं नारायणं प्रीणयामः'' इति भक्तजनेभ्यः सुमधुरसन्देशः तत्र निरूपितः । ब्रह्मादिदेवा अपि तं द्रष्टुं कातरतया प्रवृत्ताः, तस्य दर्शनं दुःखराशिं निर्मूलयति । सः अनन्तगुणपरिपूर्णः, साकारः, तस्य गुणानां च्युतिरेव नास्ति । सः विश्वधारकः भक्तदुःखपरिहारकः, तस्मिन् समर्पितानि कर्माणि अक्षयफलदायीनि भवन्ति । लक्ष्मीरपि स्वकृपाकटाक्षदृष्ट्या भगवतः नीराजनं करोति । इत्यादयः अनेके विषयाः रोमहर्षणाः अत्राध्याये निरूपिताः ।

नवमे अध्याये–

भगवतः दशावतारान् अत्र निरूप्य तस्मिन् शरणागतिः प्रार्थिता ।

दशमे अध्याये–

''करुणापूर्ण, अभीष्टप्रद, भगवन् । तव महिमानं इतोप्यतिशयेन प्रदर्शय'' इति सर्वदा भगवतः दर्शनवन्तोप्याचार्याः भगवद्भक्तानां कृते पुनः प्रार्थितवन्तः । आपादमौलिपर्यन्तं भगवतः वर्णनं पुनरत्र कृतम् ।

एकादशे अध्याये–

भगवान् नारायणः ब्रह्मरुद्रादिभिः वन्दितः, सर्वोत्तमः, इति तं उपवर्ण्य तस्य आनन्दमयरूपं पुनः पुनः नमत्याचार्यः । भगवतः

आनन्दमयरूपं भक्तानां कृते अमृतधारां स्रावयति । देवानां महदैश्वर्य-दायी, परममुक्तिप्रदाता च भगवान् भक्तेभ्यः इहपरयोः इष्टार्थान् ददाति इति प्रतिपादितम् ।

द्वादशे अध्याये–

आनन्दमयः आनन्दपरिपूर्णश्च भगवान्नारायणः आनन्दतीर्थनामकाय मह्यं परमानन्दं ददातु इति तं स्तुत्वा, स तु नारायणः भक्तानां आनन्दचन्द्रिकां प्रसारयति । भगवन्मन्दिरे सञ्चरतां भक्तानां, भगव-त्सेवानिरतानां च भक्तानां च कृते सः करुणामृतं प्रयच्छति । इति भगवतः विविधमाहात्म्यमत्र मनोज्ञं निरूपितम् ।

एवं द्वादशाध्यायात्मकेऽस्मिन् स्तोत्रे श्रीमदाचार्याः, अनुपमका-व्यशैल्या, सुन्दरबन्धुरपदैः, अत्यन्तं हृदयङ्गमतया भगवतः गुणगानं अकार्षुः । प्रतिदिनं स्तोत्रस्यास्य पारायणकर्तारः सङ्गीतसंयोजनपूर्वकं ये च गायकाः, ते सर्वेऽपि श्रीकृष्णस्य, आचार्याणां च विशेषानुग्रह-पात्रीभूता भवन्ति ॥

## कन्दुकस्तुतिः
### (श्रीकृष्णपद्यम्)

श्रीमदाचार्याः बाल्ये कन्दुकक्रीडासमये स्तोत्रमिदं श्लोकद्वयात्मकं व्यरचयन् इति प्रसिद्धिः । पठितुं तथा गातुं च अनुकूलमिदं स्तोत्रम् । अत्र पदलालित्यं पदसंयोजनं च अत्यन्तं मनोहरम् । पादेन शकटासुरं ताडयित्वा तं अहनत् इत्ययं विषयः ''पदतलविदलितगुरुतरशकटः'' इति सुललितशैल्या निरूपितः । वायुवेगिनं गरुडं आरूढः नारायणः इत्ययं विषयः ''सततगसमजवखगपतिनिरतः'' इति वर्णितः । कमलनयनः कृष्णः इत्ययं विषयः ''सरसिजनवदलविकसितनयनः'' इति सुन्दरपद-

प्रयोगेन वर्णितः । भगवान् शत्रुसमूहं स्वस्य शरैः भेदितवान् इत्ययं विषयः "शरशतशकलितरिपुशतनिवहः" इति मधुरशब्दप्रयोगपूर्वकं विवृतः ॥

एकस्मिन् पादे "नीलमेघश्यामः" इति वक्तुं "कालधनालीकर्तुरकायः" इति गुरुयुक्ताः कठिणशब्दाः प्रयुक्ताः । अन्यस्मिन् चरणे "पदतलविदलितगुरुतरशकटः" इति लघुयुक्ताः सुललितशब्दाः प्रयुक्ताः ।

काव्यस्य पदमाधुर्यविषये तथा सुन्दरपदसंयोजनविषये च इदं स्तोत्रं पद्यद्वयात्मकं उत्तममुदाहरणं भवति ॥

## बिल्वमङ्गलः साधुः

सप्तवर्णात्मकमितं वाक्यं सर्वमूलग्रन्थान्तर्गतमिति श्रीसत्यपरायणतीर्थाः अब्रुवन् । "बिल्वमङ्गलः साधुः" इति सर्वज्ञोक्तं वाक्यं सर्वमूलान्तर्भूतं इति सम्प्रदायविदः" इति ॥ अतः इदं वाक्यं अत्र मुद्रितमस्माभिः ॥

## कृतज्ञतासमर्पणम्

सर्वमूलग्रन्थप्रतिपाद्याय भगवते नारायणाय भूयांसि नमांसि समर्पयामि ।

सर्वमूलकर्तृभ्यः श्रीमदानन्दतीर्थभगवत्पाचार्येभ्यः अनन्तानि नमांसि अर्पये ।

शुभाशीर्वचनैः तथा अनुग्रहसन्देशदानेन च अनुगृहीतवद्भ्यः द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानस्य संरक्षकेभ्यः, तथा मार्गदर्शकेभ्यः वैराग्यभाग्भ्यः, सदा पाठप्रवचननिरतेभ्यः श्रीमदुत्तरादिमठाधीशेभ्यः श्रीसत्यात्मतीर्थश्रीमच्चरणेभ्यः साष्टाङ्गं भूयांसि नमांसि समर्पयामि ।

ग्रन्थमिमं सम्पादयितुं सदवकाशं दत्तवद्भ्यः प्रतिष्ठानस्य गौरवाध्यक्षेभ्यः, तथा गौरवनिर्देशकेभ्यः, "महामहोपाध्यायः" इति

प्रशस्तिभागभ्यः, शताधिकग्रन्थसम्पादकेभ्यः, राष्ट्रपतिप्रशस्तिभाग्भ्यः प्रो. के.टि. पाण्डुरङ्गि महाभागेभ्यः भूयांसि नमांसि अर्पये ।

द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानस्य उपाध्यक्षेभ्यः सदा पाठप्रवचन-शीलेभ्यः, श्रीजयतीर्थविद्यापीठस्य प्राचार्येभ्यः, जनानुरागिभ्यः डा. सत्यध्यानाचार्य कट्टी महाभागेभ्यः हार्दानि वन्दनानि अर्पये ।

ग्रन्थस्यास्य सम्पादनकर्मणि अत्युत्साहप्रदर्शनपूर्वकं सश्रद्धं सहकृतवन्तं, सदा कार्यशीलं, परोपकारिणं, डा. एस्.आर्. पाण्डुरङ्गिमहाभागं श्रीहरिवायुगुरवः विशेषतया अनुगृह्णन्तु इति शुभम् आशासे ।

ग्रन्थमिमं अधीत्य सहृदयाः सन्तोषं प्राप्नुयुश्चेत् सफलोऽयं परिश्रमः इत्युक्त्वा विरमामि ॥

बेङ्गळूरु

इति सज्जनविधेयः
रामाचार्य माळगी

# विषयानुक्रमणिका

## स्तोत्राणि

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# प्रमाणलक्षणम्

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

अशेषगुरुमीशेशं नारायणमनामयम् ।
सम्प्रणम्य प्रवक्ष्यामि प्रमाणानां स्वलक्षणम् ॥

यथार्थं प्रमाणम् । तद्विविधम् । केवलमनुप्रमाणं च । यथार्थज्ञानं केवलम् । तत्साधनमनुप्रमाणम् ।

केवलं चतुर्विधम् । ईशलक्ष्मीयोग्ययोगिभेदेन ।

पूर्वद्वयमनादिनित्यम् । स्वातन्त्र्यपारतन्त्र्याभ्यां तद्विशेषः । पूर्वं स्वपरगताखिलविशेषविषयम् । द्वितीयमीशेऽन्येभ्योऽधिकम् । असार्वत्रिकम् । अन्यत्र सर्वविषयम् । स्पष्टत्वे भेदः ।

योगिज्ञानमृजूनामनादिनित्यम् । ईशे जीवेभ्योऽधिकम् । असार्वत्रिकम् । अन्यत्रालोचने सर्वविषयम् । क्रमेण वर्धमानम् आमुक्तेः । ततोऽव्ययम् । ततोऽर्वाक्क्रमेण ह्रसितम् । सादि च तात्त्विकेभ्योऽन्यत्र । अयोगिज्ञानमुत्पत्तिविनाशवत् । अल्पम् ।

अनुप्रमाणं त्रिविधम् । प्रत्यक्षमनुमानमागम इति । निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम् । निर्दोषोपपत्तिरनुमानम् । निर्दोषः शब्द आगमः । अर्थापत्त्युपमे अनुमाविशेषः । अभावोऽनुमा प्रत्यक्षं च । परामर्शापरामर्शविशेषात् । सम्भवपरिशेषावनुमा । आत्मान्योन्याश्रयचक्रकानवस्थाकल्पनागौरवश्रुतदृष्टहानादयो दूषणानुमा । उपक्रमोपसंहारतदैकरूप्याभ्यासापूर्वताफलार्थवादाश्च

उपपत्तिविशेषाः । त एव सोपपत्तयो लिङ्गानि । समाख्यावाक्य-प्रकरणस्थानानि च लिङ्गविशेषाः । व्याप्तिरुपपत्तिमूलम् । सा प्रतिज्ञाहेतुदृष्टान्तरूपा । हेतुगर्भा प्रतिज्ञा केवलाऽपि । सिद्धौ प्रतिज्ञाया हेतुमात्रं च । दृष्टान्तः सप्रतिज्ञो हेतुगर्भः ।

उपपत्तिदोषौ विरोधासङ्गती । न्यूनाधिके वाचनिके ।

संवादानुक्तियुता निग्रहाः ।

प्रत्यक्षं सप्तविधम् । साक्षिपडिन्द्रियभेदेन ।

मानसप्रत्यक्षजा स्मृतिः । स्मृत्यनुवादयोर्नाप्रामाण्यम् । यथार्थत्वानुभवात् । अहानेश्च ।

विरोधो मानस्ववाक्याभ्याम् । स्ववाक्यविरोधोऽपसिद्धान्तजाति-रूपेण । जातिर्न मेये मानापेक्षेत्यादिका । मेये मानापेक्षाऽस्तीति च तेनैव न्यायेन सिद्धत्वात् । मानविरोधश्च । छलमसङ्गतम् । अन्यच । गृष्टिविवक्षया गामानयेत्युक्ते पृथिवीविवक्षया गवानयनमशक्य-मितिवत् ।

त्रिविधो विरोधः । प्रतिज्ञाहेतुदृष्टान्तभेदेन । प्रमाणविरुद्धार्थ-प्रतिज्ञा प्रतिज्ञाविरोधः । हेतुस्वरूपासिद्धिरव्याप्तिश्चेति हेतुविरोधः । साध्यस्य साधनस्य वाऽननुगमो दृष्टान्तविरोधः । प्रतिज्ञायाः समवलविरोध एव सप्रतिसाधनः । स एवोपाधिदोपोऽपि ।

सर्व एते दृश्यत्वानुमाने द्रष्टव्याः ।

प्रत्यक्षागमादिभिर्जगतः सत्यत्वात् तत्पक्षे दृश्यत्वस्य च मिथ्या-त्वात् । अनिर्वचनीयस्य प्रतिवादिनोऽसिद्धत्वात् । आत्मनोऽपि

दृश्यत्वात् । शुक्तिरजतादेरनिर्वचनीयत्वाभावात् । अनिर्वचनीय-दृश्यत्वाभावात् । मानसिद्धत्वादिति सप्रतिसाधनत्वाच्च । जगत्सत्यत्वग्राहिप्रत्यक्षस्य वर्तमानमात्रग्राहित्वे अनुमानागमप्रामाण्य-ग्राहिणोऽपि प्रत्यक्षत्वाविशेषादुत्तरक्षणे प्रामाण्यं न सेत्स्यतीति भेदादिवाक्यानामेव प्रामाण्यं स्यात् । तस्य साक्षिसिद्धत्वं चेज्जगत्सत्यत्वमपि साक्षिसिद्धम् । व्यभिचारश्चेदागमार्थानुमानिर्दोषत्वा-ध्यवसाये च समः । अत उत्तरदिवसेऽभेदवाक्यस्य भेदोऽर्थः स्यात् । निर्दोषानुमायाः सदोषत्वं, सदोषानुमाया निर्दोषत्वं इत्यव्यवस्था । आश्रयसाध्यव्यधिकरणासिद्धयो न दूषणं अतिप्रसङ्गाभावात् । अतिप्रसङ्गेन हि दोषत्वादोषत्वे कल्प्ये । व्याप्तिरेव हि प्रयोजिका । असत्यपि व्याप्तिरस्त्येव । असदाश्रयस्य साधकत्वं नेत्यपि व्याप्तिं विना कथं निवार्यते । असदाश्रयमित्यादिविशेषणत्वसम्भवे कथम-व्याप्तिः । न चात्यन्ताभावोऽपि सर्वधर्मरहितः । प्रमेयत्वाद्यनुभवात् । परिशेषार्थापत्तिप्रामाण्याभ्युपगमाच्च । विमतं सकर्तृकमित्यत्र सर्वज्ञत्वस्य पक्षधर्मताबलेन सिद्ध्यङ्गीकारात् ।

परिशेषोऽर्थापत्तिरनुमानमित्यविशेषः । उपपत्तिमात्रत्वात् । उपपत्तेश्च व्याप्त्यपेक्षा सर्वथाङ्गीकार्येत्याग्रहमात्रेण भेदः । उपमान-स्यापि व्याप्तिरूपत्वात् । न हि स्वसदृशेनासदृशं क्वचिद्दृष्टम् । योग्यानुपलब्धेश्च लिङ्गत्वम्, अविशेषात् । उक्तदोषेष्वेवाशेषानुमान-दोषाणामन्तर्भावः । साध्याविशिष्टोऽसिद्धः । सिद्धसाधकोऽसङ्गतः ।

न प्रमासाधनं प्रमाणम् । ज्ञानव्यतिरिक्तायां प्रमायां प्रमाणा-भावात् । न चाज्ञातपरिच्छित्तिरेव प्रमेत्यत्र किञ्चिन्मानम् । याथार्थ्यमेव प्रामाण्यमित्यङ्गीकारात् ।

न चानुभूतिरेव प्रमाणम् । स्मृत्यादावव्याप्तेः । वेदानुमानादि-प्रामाण्यप्रसिद्धेश्च ।

'स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ।
प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिः' । इति श्रुतेश्च ।

ऐतिह्यमागमभेदः ।

न च सम्यगनुभवसाधनं प्रमाणम् । ईश्वरज्ञानादावव्याप्तेः । अप्रामाण्ये प्रमाणाभावाच्च । प्रामाण्यज्ञाने च । तत्राप्यङ्गीकारेऽनवस्थितेः । स्वप्रकाशात्माङ्गीकारे तत्राव्याप्तेः । स्मृतेश्च प्रामाण्यानङ्गीकारे अनुभूतं मयेत्यत्र प्रमाणाभावात् । लिङ्गत्वेन प्रामाण्ये कल्पनागौरवम् । दृष्टहानिश्च । स्मृतिप्रमाणद्वैविध्य-मात्रकल्पने मिथ्याज्ञानादेर्निराकरणादनुभवविरोधः । तदनुभवा-भाव इत्युक्ते अनुभवः स्मृतिश्च नास्तीत्युक्ते किमुत्तरम् ।

स्वसिद्धैः साधनं परसिद्धैर्दूषणम् । अतो न दूषणे अप-सिद्धान्तादि । इष्टापत्तिः सिद्धसाधनत्वादसङ्गतमेव ।

आनन्दतीर्थमुनिना ब्रह्मतर्कोक्तमार्गतः ।
मानलक्षणमित्युक्तं सङ्क्षेपाद्ब्रह्मसिद्धये ॥

अशेषमानमेयैकसाक्षिणेऽक्षयमूर्तये ।
अजेशपुरुहूतेड्य नमो नारायणाय ते ॥

॥ इति श्रीमदानन्ततीर्थभगवत्पादाचार्यविरचितं प्रमाणलक्षणम् सम्पूर्णम् ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# कथालक्षणम्

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

नृसिंहमखिलाज्ञानतिमिराशिशिरद्युतिम् ।
सम्प्रणम्य प्रवक्ष्यामि कथालक्षणमञ्जसा ॥ १ ॥

वादो जल्पो वितण्डेति त्रिविधा विदुषां कथा ।
तत्त्वनिर्णयमुद्दिश्य केवलं गुरुशिष्ययोः ॥ २ ॥

कथाऽन्येषामपि सतां वादो वा समितेः शुभा ।
ख्यात्याद्यर्थं स्पर्धया वा सतां जल्प इतीर्यते ॥ ३ ॥

वितण्डा तु सतामन्यैः तत्त्वमेपु निगूहितम् ।
स्वयं वा प्राश्निकैर्वादे चिन्तयेत् तत्त्वनिर्णयम् ॥ ४ ॥

रागद्वेपविहीनास्तु सर्वविद्याविशारदाः ।
प्राश्निका इति विज्ञेयाः विपमा एक एव वा ॥ ५ ॥

अशेपसंशयच्छेत्ता निस्संशय उदारधीः ।
एकश्चेत् प्राश्निको ज्ञेयः सर्वदोषविवर्जितः ॥ ६ ॥

एको वा वहवो वा स्युर्विष्णुभक्तिपरास्सदा ।
विष्णुभक्तिर्हि सर्वेषां सद्गुणानां स्वलक्षणम् ॥ ७ ॥

पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्धये ।
नैपा तर्केणापनेया मतिरित्याह हि श्रुतिः ॥ ८ ॥

अन्यार्थ एवागमस्य वक्तव्यः प्रतिवादिना ।
ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् ॥ ९ ॥

मूलरामायणं चैव सम्प्रोच्यन्ते सदागमाः ।
अनुकूला य एतेषां ते च प्रोक्तास्सदागमाः ॥ १० ॥

अन्ये दुरागमा नाम तैर्न साध्यं हि साध्यते ।
स्वपक्ष आगमश्चैव वक्तव्यः प्रतिवादिना ॥ ११ ॥

तस्याप्यन्यार्थता साध्या वादिना स्वार्थसिद्धये ।
अन्यार्थता निराकार्या स्वागमस्य विनिश्चयात् ॥ १२ ॥

उपपत्त्यवकाशोऽत्र ह्यागमार्थविनिर्णये ।
वाद्यागमार्थे निर्णीत आगमार्थः परस्य तु ॥ १३ ॥

निर्णेयः सहितैः पश्चात् ततो निश्शेषनिर्णयः ।
प्रत्यक्षसिद्धेष्वर्थेषु प्रश्ने मामक्षजं वदेत् ॥ १४ ॥

ज्ञानं वा ज्ञानसिद्धेषु नानुमां प्रथमं वदेत् ।
परतुष्टिकरं वाक्यं वदेतां यदि वादिनौ ॥ १५ ॥

स एवात्रागमो ज्ञेयः परतुष्टिर्हि तत्फलम् ।
एवं निर्णयपर्यन्तं वादे सुबहवोऽपि हि ॥ १६ ॥

घटेयुश्चिरकालं च जल्पे यावत् परो जितः ॥ १७ ॥

तत्त्वनिर्णयवैलोम्यं वादे साक्षात् पराजयः ।
संवादे श्लाघ्यतैव स्यात् गुरुत्वमितरस्य च ॥ १८ ॥

तत्त्वनिर्णयवैलोम्ये निन्द्यो दण्ड्योऽथ वा भवेत् ।
विरोधाऽसङ्गतिन्यूनतूष्णीम्भावादिकैर्जितः ॥ १९ ॥

भवेज्जल्पे वितण्डायां न्यायो जल्पवदीरितः ।
संवादे दण्ड्यता न स्यात् वितण्डाजल्पयोरपि ॥ २० ॥

पराजितत्वमात्रं स्यात् निन्द्यो दण्ड्योऽपि वाऽन्यथा ।
अनुवादादिराहित्यं नैव जल्पेऽपि दूषणम् ॥ २१ ॥

विद्याहीनत्वलिङ्गेऽपि वादिनोः स्यात् पराजयः ।
तदभावात् नैव षट्कात् अन्यो निग्रह इष्यते ॥ २२ ॥

अन्तर्भावादिहान्येषां निग्रहाणां इति स्म ह ।
विद्या परीक्षापूर्वैव वृत्तिर्जल्पवितण्डयोः ॥ २३ ॥

स्खलितत्वादिमात्रेण न तत्रापि पराजयः ।
वादजल्पवितण्डानां इति शुद्धं स्वलक्षणम् ॥ २४ ॥

आनन्दतीर्थमुनिना ब्रह्मतर्कानुसारतः ।
कथालक्षणमित्युक्तं प्रीत्यर्थं शार्ङ्गधन्वनः ॥ २५ ॥

सदोदितामितज्ञानपूरवारितहृत्तमाः ।
नरसिंहः प्रियतमः प्रीयतां पुरुषोत्तमः ॥ २६ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं कथालक्षणं सम्पूर्णम् ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# तत्त्वसङ्ख्यानम्

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्त्वमिष्यते ।
स्वतन्त्रो भगवान् विष्णुर्भावाभावौ द्विधेतरत् ॥ १ ॥

प्राक्प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते ।
चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः ॥ २ ॥

दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनम् ।
नित्यादुःखा रमाऽन्ये तु स्पृष्टदुःखास्समस्तशः ॥ ३ ॥

स्पृष्टदुःखा विमुक्ताश्च दुःखसंस्था इति द्विधा ।
दुःखसंस्था मुक्तियोग्या अयोग्या इति च द्विधा ॥ ४ ॥

देवर्षिपितृपनरा इति मुक्तास्तु पञ्चधा ।
एवं विमुक्तियोग्याश्च तमोगाः सृतिसंस्थिताः ॥ ५ ॥

इति द्विधा मुक्त्ययोग्या दैत्यरक्षःपिशाचकाः ।
मर्त्याधमाश्चतुर्धैव तमोयोग्याः प्रकीर्तिताः ॥ ६ ॥

ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा ।
नित्यानित्यविभागेन त्रिधैवाचेतनं मतम् ॥ ७ ॥

नित्या वेदाः पुराणाद्याः कालः प्रकृतिरेव च ।
नित्यानित्यं त्रिधा प्रोक्तमनित्यं द्विविधं मतम् ॥ ८ ॥

असंसृष्टं च संसृष्टमसंसृष्टं महानहम् ।
बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च ॥ ९ ॥

संसृष्टमण्डं तद्गं च समस्तं परिकीर्तितम् ।
सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ॥ १० ॥

बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च ।
विष्णुनाऽस्य समस्तस्य समासव्यासयोगतः ॥ ११ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं तत्त्वसङ्ख्यानं सम्पूर्णम् ॥



## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# तत्त्वविवेकः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

स्वतन्त्रं परतन्त्रं च प्रमेयं द्विविधं मतम् ।
स्वतन्त्रो भगवान्विष्णुर्निर्दोषाखिलसद्गुणः ॥ १ ॥

द्विविधं परतन्त्रं च भावोऽभाव इतीरितः ।
पूर्वापरसदात्वेन त्रिविधोऽभाव इष्यते ॥ २ ॥

भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् ।
चेतनोऽचेतनश्चेति भावोऽपि द्विविधः स्मृतः ॥ ३ ॥

नित्यमुक्तश्च सृतियुक्परतन्त्रोऽपि चेतनः ।
द्विधैव श्रीर्नित्यमुक्ता सृतियुक्च द्विधा मतः ॥ ४ ॥

मुक्तोऽमुक्त इति ह्यत्र ब्रह्मान्ता उत्तरोत्तरम् ।
मुक्ताः शतगुणाः प्रोक्ता रमा तेभ्योऽखिलैर्गुणैः ॥ ५ ॥

नित्यं बहुगुणोद्रिक्ता ततोऽनन्तगुणो हरिः ।
अमुक्तास्त्रिविधास्तत्र नीचमध्योच्चभेदतः ॥ ६ ॥

मुक्तियोग्यास्तत्र चोच्चा नित्यावर्तास्तु मध्यमाः ।
नीचा नित्यतमोयोग्या द्विधैवाचेतनं मतम् ॥ ७ ॥

नित्यानित्यत्वभेदेन देशः कालः श्रुतिस्तथा ।
भूतेन्द्रियप्राणगुणसूक्ष्मरूपं च नित्यकम् ॥ ८ ॥

एषां विकारोऽनित्यः स्यान्नित्या एव हि चेतनाः ।
गुणक्रियाजातिपूर्वा धर्माः सर्वेऽपि वस्तुनः ॥ ९ ॥

रूपमेव द्विधं तच्च यावद्वस्तु च खण्डितम् ।
खण्डिते भेद ऐक्यं च यावद्वस्तु न भेदवत् ॥ १० ॥

खण्डितं रूपमेवात्र विकारोऽपि विकारिणः ।
कार्यकारणयोश्चैव तथैव गुणतद्वतोः ॥ ११ ॥

क्रियाक्रियावतोस्तद्वत्तथा जातिविशेषयोः ।
विशिष्टशुद्धयोश्चैव तथैवांशांशिनोरपि ॥ १२ ॥

य एतत् परतन्त्रं तु सर्वमेव हरेस्सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥ १३ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः तत्त्वविवेकः सम्पूर्णम् ॥



## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# उपाधिखण्डनम्

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः ।
अशेषदोषरहितः प्रीयतां कमलालयः ॥ १ ॥

अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चन ।
उपाधिभेदाद् घटत इति चेत् स स्वभावतः ।
अज्ञानतो वा द्वैतस्य सत्यता स्वत एव चेत् ॥ २ ॥

अनवस्थितिरज्ञानहेतौ वाऽन्योन्यसिद्धिता ।
चक्रकापत्तिरथ वा भेदश्चोपाधितः कुतः ॥ ३ ॥

विद्यमानस्य भेदस्य ज्ञापको नैव कारकः ।
उपाधिर्दृष्टपूर्वो हि खेऽपि देशान्तरस्य सः ।
ज्ञापको विद्यमानस्य मूढबुद्धिव्यपेक्षया ॥ ४ ॥

न चेदुपाधिसम्बन्ध एकदेशेऽथ सर्वगः ।
एकदेशेऽनवस्था स्यात् सर्वगश्चेन्न भेदकः ॥ ५ ॥

सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः ।
दृश्यो ह्युपाधिभेदेऽपि हस्तपादादिगो यथा ॥ ६ ॥

नानादेहगभोगानुसन्धानं योगिनो यथा ।
न चेद् भोगानुसन्धानं तदिच्छा योगिनः कुतः ॥ ७ ॥

अनुसन्धानरहितदेहबाहुल्यमन्यथा ।
सिद्धमेव हि तत्पक्षे विशेषो योगिनः कुतः ॥ ८ ॥

सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता ।
तत्सिद्धौ चैव तत्सिद्धिरित्यन्योन्यव्यपाश्रयः ॥ ९ ॥

आत्मस्वभावभेदस्य विदोषत्वेन चाखिलः ।
प्रत्यक्षादिविरोधाच्च दुष्टः पक्षोऽयमञ्जसा ॥ १० ॥

चेष्टालिङ्गेन सात्मत्वे परदेहस्य साधिते ।
अन्यत्वं स्वात्मनस्तस्मात् सर्वैरेवानुभूयते ॥ ११ ॥

अज्ञता चाल्पशक्तित्वं दुःखित्वं स्वल्पकर्तृता ।
सर्वज्ञताऽदीशगुणविरुद्धा ह्यनुभूतिगाः ॥ १२ ॥

सार्वज्ञादिगुणा विष्णोः श्रुतिषु प्रतिपादिताः ।
"सत्यः सो अस्य महिमा" इत्यादिवाक्यान्मृषा न च ॥ १३॥

न च वेदोक्तमिथ्यात्वे मानं तन्मानताऽपि न ।
अतोऽज्ञासम्भवादेव नाधिकार्यैक्यवादिनाम् ॥ १४ ॥

अतो नाज्ञातमिति च विषयो विषयान्तरे ।
अज्ञाभावात् फलं कस्य योगश्शशनृभृङ्गयोः ॥ १५ ॥

दुर्घटत्वं भूषणं चेत् स्यादविद्यात्वमात्मनः ।
अन्धन्तमोऽप्यलङ्कारो नित्यदुःखं शिरोमणिः ॥ १६ ॥

अतः "परो मात्रया" इति पूर्वश्रुतिनिदर्शितः ।

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# उपाधिखण्डनम्

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः ।
अशेषदोषरहितः प्रीयतां कमलालयः ॥ १ ॥

अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चन ।
उपाधिभेदाद् घटत इति चेत् स स्वभावतः ।
अज्ञानतो वा द्वैतस्य सत्यता स्वत एव चेत् ॥ २ ॥

अनवस्थितिरज्ञानहेतौ वाऽन्योन्यसिद्धिता ।
चक्रकापत्तिरथ वा भेदश्चोपाधितः कुतः ॥ ३ ॥

विद्यमानस्य भेदस्य ज्ञापको नैव कारकः ।
उपाधिर्दृष्टपूर्वो हि खेऽपि देशान्तरस्य सः ।
ज्ञापको विद्यमानस्य मूढबुद्धिव्यपेक्षया ॥ ४ ॥

न चेदुपाधिसम्बन्ध एकदेशेऽथ सर्वगः ।
एकदेशेऽनवस्था स्यात् सर्वगश्चेन्न भेदकः ॥ ५ ॥

सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः ।
दृश्यो ह्युपाधिभेदेऽपि हस्तपादादिगो यथा ॥ ६ ॥

नानादेहगभोगानुसन्धानं योगिनो यथा ।
न चेद् भोगानुसन्धानं तदिच्छा योगिनः कुतः ॥ ७ ॥

अनुसन्धानरहितदेहबाहुल्यमन्यथा ।
सिद्धमेव हि तत्पक्षे विशेषो योगिनः कुतः ॥ ८ ॥

सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता ।
तत्सिद्धौ चैव तत्सिद्धिरित्यन्योन्यव्यपाश्रयः ॥ ९ ॥

आत्मस्वभावभेदस्य विदोषत्वेन चाखिलः ।
प्रत्यक्षादिविरोधाच्च दुष्टः पक्षोऽयमञ्जसा ॥ १० ॥

चेष्टालिङ्गेन सात्मत्वे परदेहस्य साधिते ।
अन्यत्वं स्वात्मनस्तस्मात् सर्वैरेवानुभूयते ॥ ११ ॥

अज्ञता चाल्पशक्तित्वं दुःखित्वं स्वल्पकर्तृता ।
सर्वज्ञताऽदीशगुणविरुद्धा ह्यनुभूतिगाः ॥ १२ ॥

सार्वज्ञादिगुणा विष्णोः श्रुतिषु प्रतिपादिताः ।
''सत्यः सो अस्य महिमा'' इत्यादिवाक्यान्मृषा न च ॥ १३॥

न च वेदोक्तमिथ्यात्वे मानं तन्मानताऽपि न ।
अतोऽज्ञासम्भवादेव नाधिकार्यैक्यवादिनाम् ॥ १४ ॥

अतो नाज्ञातमिति च विषयो विपयान्तरे ।
अज्ञाभावात् फलं कस्य योगश्शशनृभृङ्गयोः ॥ १५ ॥

दुर्घटत्वं भूषणं चेत् स्यादविद्यात्वमात्मनः ।
अन्धन्तमोऽप्यलङ्कारो नित्यदुःखं शिरोमणिः ॥ १६ ॥

अतः ''परो मात्रया'' इति पूर्वश्रुतिनिदर्शितः ।

''अन्यमीशम्'' इति श्रुत्या भिन्नजीवदृशं गतः ।
भिन्नत्वेनात्मसादृश्यदो ''यदा'' इति श्रुतेः सदा ॥ १७ ॥

मायावादतमोव्याप्तमिति तत्त्वदृशा जगत् ।
भातं सर्वज्ञसूर्येण प्रीतये श्रीपतेः सदा ॥ १८ ॥

नमोऽमन्दनिजानन्दसान्द्रसुन्दरमूर्तये ।
इन्दिरापतये नित्यानन्दभोजनदायिने ॥ १९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं उपाधिखण्डनं सम्पूर्णम् ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# मायावादखण्डनम्

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः ।
जयत्यमितसज्ज्ञानसुखशक्तिपयोनिधिः ॥

विमतमनारम्भणीयम्, अन्यथाप्रतिपादकत्वात्, यदित्थं तत् तथा, यथा सम्प्रतिपन्नम् । न हि ब्रह्मात्मैक्यस्य याथार्थ्यं तत्पक्षे । अद्वैतहानेः स्वरूपातिरेके । अनतिरेके स्वप्रकाशत्वादात्मनः सिद्धसाधनता । निर्विशेषत्वादात्मनो नाऽनधिगतो विशेषः । सिद्धत्वात् स्वरूपस्य विशेषाभावाच्च नाज्ञानं कस्यचिदावरकम् । 'अनधिगतार्थगन्तृप्रमाणम्' इति च तन्मतम् ।

अज्ञानासम्भवादेव तन्मतमखिलमपाकृतम् । मिथ्यात्वे चैक्यस्यातत्त्वावेदकत्वमागमस्य स्यात् । सत्यता च भेदस्य । एवमेव प्रयोजनमपि निरस्तम् । स्वरूपत्वान्मोक्षस्य पूर्वमेव सिद्धत्वात् । अज्ञानासम्भवेन चतुर्थप्रकाराभावात् पञ्चमप्रकारताऽपि निरस्ता । विषयप्रयोजनाभावादेवाधिकारी च । तदभावादेव सम्बन्धोऽपि ।

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति मां सर्वभावेन भारत ॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत' ॥

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥

महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' ॥

'भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति' । इति विष्णोः सर्वोत्तमत्वमेव सर्वशास्त्रार्थत्वेन भगवता श्रुत्या चाभिहितम् ॥

इति सर्वज्ञमुनिना मायावादतमोऽखिलम् ।
निरस्तं तत्त्ववादेन सतां संशयनुत्तये ॥

नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम् ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं
मायावादखण्डनं सम्पूर्णम् ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# प्रपञ्चमिथ्यात्वानुमानखण्डनम्

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

ॐ ॥ विमतं मिथ्या, दृश्यत्वात्, यदित्थं तत् तथा यथा सम्प्रतिपन्नम् । इत्युक्ते जगतोऽभावादाश्रयासिद्धः पक्षः । अनिर्वचनीयासिद्धेरप्रसिद्धविशेषणः । सदसद्वैलक्षण्ये मिथ्यात्वे सिद्धसाधनता ।

दृश्यत्वाभावादसिद्धो हेतुः । अनिर्वचनीयासिद्धेरेव सपक्षाभावाद् विरुद्धः । आत्मनोऽपि दृश्यत्वादनैकान्तिकः । जगतोऽभावेऽनुमानस्याप्यभाव इति तर्कबाधितत्वेनानध्यवसितः ।

प्रत्यक्षादिविरुद्धत्वात्, 'विश्वं सत्यम्' इत्यादिवाक्यविरुद्धत्वाच्च कालात्ययापदिष्टः । 'रजतं दृष्टम्' इति भ्रममात्रत्वात्, 'विमतं सत्यं दृश्यत्वात् आत्मवत्' इत्यपि प्रयोज्यत्वात् प्रकरणसमः । विमतं सत्यं प्रमाणदृष्टत्वात् यदित्थं तत्तथा यथाऽऽत्मा इति प्रयोगात् सप्रतिसाधनः ।

शुक्तिरजतस्याप्यनिर्वचनीयत्वाभावात् साध्यविकलो दृष्टान्तः । उक्तप्रकारेण दृश्यत्वाभावात् साधनविकलश्च । प्रमाणविरुद्धत्वमुपाधिः ।

साध्यधर्मविशिष्टः पक्षः । साध्यसमानधर्मविशिष्टः सपक्षः । साध्यविपरीतधर्मविशिष्टो विपक्षः । पक्षवचनं प्रतिज्ञा । लिङ्गं हेतुः । निदर्शनं दृष्टान्तः ॥

यो दृश्यते सदानन्दनित्यव्यक्तचिदात्मना ।
निर्दोषाखिलकल्याणगुणं वन्दे रमापतिम् ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं प्रपञ्चमिथ्यात्वानुमानखण्डनं सम्पूर्णम् ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# तत्त्वोद्योतः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

सर्वत्राखिलसच्छक्तिः स्वतन्त्रोऽशेषदर्शनः ।
नित्यातादृशचिच्चेत्ययन्तेष्टो नो रमापतिः ॥

विमतो भिन्नो मुक्तत्वात् यदित्थं तत्तथा यथा सम्प्रतिपन्नः । न च भेदे विकल्पो युज्यते । अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेव । शशविषाणं गोविषाणं वोच्यत इतिवत् । न चानिर्वचनीये किञ्चिन्मानम् । मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च । अनुमानस्य चाप्रसिद्धविशेषणः पक्षः । न च धूमत्ववन्मिथ्यात्वमित्युभयसम्प्रतिपन्नं सामान्यमस्ति । न च वाष्पारोपितधूमेन धूमवत्त्वं व्यभिचरति ।

न च भावाभावविलक्षणं क्वचिदागमो वक्ति ।

'नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमापरो यत्' इत्यत्र च ।

पारिशेष्येणानिर्वचनीयत्वाङ्गीकारे 'आनीदवातं स्वधया तदेकम्' इति तदानीं परिशिष्टत्वाद्ब्रह्मण एवानिर्वचनीयत्वं स्यात् ।

'मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते ।
मूर्तामूर्तेतरद्ब्रह्म न सत्तन्नासदुच्यते' ॥ इति पैङ्गिश्रुतिः ।

'यदन्यद् वायोश्चान्तरिक्षाच्चैतत्सत्' इति माध्यन्दिनश्रुतिः ।

'अद्भुतत्वादनिर्वाच्यं ब्रह्म चिच्चेत्यमेव च ।
अचिन्त्यं तत एवैतत् अतर्क्याज्ञेयमेव च ।

ऋ गताविति धातोस्तु पूर्वावगतवत्सदा ।
स्थितेर्ब्रह्मर्तमित्युक्तमनृतं परिणामतः ॥

प्रकृतिप्राकृतं प्रोक्तं असत् तदशुभत्वतः ।
असतां बुद्धिगम्यत्वादसत्यमिति चोच्यते ॥

नियमेन वहिश्चित्तास्ते सन्तो ब्रह्मणि स्थिताः ।
विश्वं सत्यं वशे विष्णोः नित्यमेव प्रवाहतः ।
न क्वाप्यनीदृशं विश्वं तत्तत्कालानुसारतः ।
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
त आसुराः स्वयं नष्टा जगतः क्षयकारिणः' ।

इत्यादि व्यासस्मृतौ ।

'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पवुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः' ॥

इत्यादि च गीतासु ।

'विश्वं सत्यं मघवाना युवोरिदापश्च न प्रमिनन्ति व्रतं वाम् ।
प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्' ।

'सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये' ।

'कविर्मनीषी परिभूस्स्वयम्भूर्याथातथ्यतोऽर्थान्
व्यदधाच्छाश्वतीभ्यस्समाभ्यः' । इत्यादिश्रुतिभिश्च ।

न चार्थापत्त्या अनिर्वचनीयत्वसिद्धिः । असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः । न च बाध्यं जगदित्यत्र किञ्चिन्मानम् । बाध्यत्वमपि हि तेषां मिथ्या । तस्य च मिथ्यात्वेऽबाध्यत्वमेव सत्यं स्यात् ।

सद्विलक्षणत्वं च सज्जातिविलक्षणत्वं सन्मात्रविलक्षणत्वं वा । जात्यङ्गीकारे सद्बहुत्वम् । सन्मात्रविलक्षणत्वं चेत्सिद्धसाधनता । ब्रह्मवैलक्षण्याङ्गीकारात् । न च कयाऽपि युक्त्या मानेन वा भेदनिराकरणं भवति । अङ्गीक्रियमाणत्वात् । अनिर्वचनीयासिद्धेश्च । सद्विलक्षणत्वमसद्विलक्षणत्वं च मिथ्येत्यविलक्षणत्वमेव सत्यं स्यात् ।

एवमेव हेत्वादिष्वपि विकल्पो निराकरणीयः ।
दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः ।

आत्मनोऽपि दृश्यत्वादनैकान्तिकता च । न चाऽत्मनो दृक्कर्मत्वं विना तज्ज्ञानत्वम् । तदज्ञाननिवृत्तिश्च तेन भवति । न च तदाकारम् । अतद्विषयत्वादेव । तद्विषयत्वमेव हि तदाकारत्वम् । न हि ज्ञानज्ञेययोरेकाकारता । न ह्यज्ञानस्य घटाश्रयत्वं ब्रह्माश्रयत्वं वाऽस्ति । पुङ्गतमेव हि तमः ज्ञानेन निवर्तते । विषयाऽश्रयं चेदज्ञानं निवर्तते तर्ह्येकेन ज्ञातस्य घटस्यान्यैरज्ञातत्वं न स्यात् । अतद्विषयज्ञानेन तदज्ञाननिवृत्तौ घटज्ञानेनापि निवर्तेत । अविषयत्वादेव तस्य ज्ञानत्वं न स्याद्घटवत् ।

जडत्वं चाप्रमातृत्वमेव । न च प्रमातृत्वमात्मनस्तैरङ्गीक्रियते । अतस्तदप्यनैकान्तिकम् । मिथ्याप्रमातृत्वं चानिर्वचनीयनिरासादेव निरस्तम् । यदि जडत्वं नामाप्रकाशत्वं तदप्यात्मनः स्वविषय-प्रकाशत्वाभावात्परविषयप्रकाशत्वाभावाच्चानैकान्तिकमेव । स्व-विषयत्वं हि कर्तृकर्मविरोधात् तैर्नाङ्गीक्रियते । मिथ्याभूत-परविषयत्वं चानिर्वचनीयनिरासादेव निरस्तम् । विषयवर्जितः प्रकाश एव न भवति घटवत् । तत्प्रमाणाभावात् ।

देशतः कालतः परिच्छिन्नत्वं प्रकृतिकालादिष्वभावाद्भागा-सिद्धम् । वस्तुतः परिच्छिन्नत्वमात्मनोऽपि भेदाङ्गीकारा-दनैकान्तिकम् ।

प्रत्यक्षबाधितं च जगन्मिथ्यात्वम् । सदिति प्रतीयमानत्वात् । न च प्रत्यक्षसिद्धमन्येन केनापि बाध्यं दृष्टम् । चन्द्रप्रादेशत्वादिविषयं तु दूरस्थत्वादिदोपयुक्तत्वादपटु । न च जगत्प्रत्यक्षस्यापटुत्वे किञ्चिन्मानम् । न च जगतोऽज्ञानजन्यत्वे किञ्चिन्मानम् ।

'न च मायाविना माया दृश्यते विश्वमीश्वरः ।
सदा पश्यति तेनेदं न मायेत्यवधार्यताम् ।
अपरोक्षदृशो मिथ्यादर्शनं न क्वचिद्भवेत् ।
सर्वापरोक्षविद्विष्णुर्विश्वदृक् तन्न तन्मृषा' ।। इति ब्रह्माण्डे ।

'ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि ।
एक आत्मा परब्रह्मभावो मुक्तिरिति ह्यपि ।।

एवमादिविरुद्धानि वचनान्यथ युक्तयः ।
प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ।।

वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।
इतराणि विरुद्धानि प्रलम्भभ्रमजान्यपि' ॥ इति व्यासस्मृतिः ।

'नासतो दृष्टत्वात्' 'नाभाव उपलब्धेः' 'वैधर्म्याच्च न स्वप्नादिवत्' इत्यादिभगवद्वचनेनापि निरस्ताः ।

न च शून्यवादिनः सकाशाद्वैलक्षण्यं मायावादिनः । व्यावहारिकसत्त्वस्य तेनाप्यङ्गीक्रियमाणत्वात् ।

'सत्यं तु द्विविधं प्रोक्तं सांवृतं पारमार्थिकम् ।
सांवृतं व्यावहार्यं स्यान्निवृत्तौ पारमार्थिकम् ॥

विचार्यमाणे नो सत्त्वं सत्त्वं चापि प्रतीयते ।
यस्य तत् सांवृतं ज्ञेयं व्यवहारपदं च यत्' ॥ इत्यादिना ।

न च निर्विशेषब्रह्मवादिनः शून्यात्कश्चिद्विशेषस्तस्य ।

'निर्विशेषं स्वयं भातं निर्लेपमजरामरम् ।
शून्यं तत्त्वम् अविज्ञेयं मनोवाचामगोचरम् ॥

जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि यत् ।
नित्यभावनया भातं तद्भावं योगिनं नयेत् ॥

भावार्थप्रतियोगित्वं भावत्वं वा न तत्त्वतः ।
विश्वाकारं च संवृत्या यस्य तत्पदमक्षयम्' ॥ इत्यादि तद्वचः ।

'अनृतजडविरोधिरूपमन्तत्रयमलबन्धनदुःखताविरुद्धम्' ।
इति च मायावादी ।

'नास्य सत्त्वमसत्त्वं वा न दोषो गुण एव वा ।
हेयोपादेयरहितं तच्छून्यं पदमक्षयम्' ॥ इति शून्यवादी ।

सत्त्वादयो धर्माः परमार्थतो मायावादिनाऽपि नाङ्गीक्रियन्ते। सर्वविशेषविनिर्मुक्तत्वाङ्गीकारात् ।

'अवाच्यं सर्वशब्दैस्तल्लक्ष्यते चाखिलैः पदैः ।
अज्ञेयं ज्ञानलक्ष्यं च तच्छून्यं पदमक्षयम्' ॥ इति शून्यवादी ।

न चाखण्डत्वेन कश्चिद्विशेषः ।

'यदखण्डं पदं लक्ष्यं सर्वैरपि विशेषणैः ।
सर्वैर्विशेषणैर्मुक्तं तच्छून्यं पदमक्षयम्' ॥ इति च शून्यवादी ।

एवमेव मायावादिराद्धान्तः ।

न च मायावादिनो भावत्वं नाम धर्मः । न च शून्यवादिनः शून्यत्वं नाम धर्मः ।

'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ।
यदासीत् तत एवाऽद्यः स्वयम्भूः समभूदजः' ॥

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' ॥

इति भगवद्राद्धान्तः ।

'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' । इत्यादि श्रुतिः ।

प्रकृष्टप्रकाशश्चन्द्र इत्यादिषु प्रकृष्टत्वादिविशेषणानि सन्त्येवेति न

तत्साम्यम् । अनित्यदेशकालसम्बन्धित्वस्य सत्त्वात् न सोऽयं देवदत्त इत्याद्युपमा च । देवदत्तादिस्वरूपमात्रस्य सिद्धत्वान्न स्वरूपमात्रे प्रश्नः । नक्षत्रादिव्यतिरेकमात्रस्यापि सिद्धत्वान्न व्यतिरेकमात्रे । अन्यथा प्रश्नस्यैवासम्भवात् ।

अतः कैर्विशेषणैर्विशिष्ट इति प्रश्ने प्रकृष्टप्रकाशतद्देशकालादि-विशिष्ट एव वाक्यार्थः । अङ्गीक्रियमाणत्वाद्विशिष्टादेरनिर्वचनीया-भावाच्च सत्यत्वञ्च सिद्धम् ।

दृष्टस्य वस्तुनो बलवद्दृष्टिं विना नान्यद्बाधकमिति दुर्घटत्वे सुघटत्वे वा नानिर्वचनीयसिद्धिः । सर्ववैलक्षण्याङ्गीकाराद्दुर्घटमपि ब्रह्म प्रमाणादङ्गीक्रियत एव ।

जगतो भिन्नमभिन्नं भिन्नाभिन्नं वेत्यादिविकल्पस्तत्रापि युज्यते । भिन्नं चेद्भेदादिविशिष्टाच्छुद्धं भिन्नमभिन्नं वेत्याद्यनवस्था । अभिन्नं चेन्मिथ्यारूपेण जगता ब्रह्मापि मिथ्यैव स्यात् । भिन्नाभिन्नं चेद्दोषद्वयमपि । उभयविलक्षणं चेदनिर्वचनीयत्वं ब्रह्मण एवा-पतितम् । यद्येवमपि नानिर्वचनीयत्वं ब्रह्मणस्तर्हि जगतोऽपि न स्यात् । ''विश्वं सत्यम्'' इत्यादिवचनमत्राप्युक्तम् ।

'न सत्तन्नासदुच्यते' । 'असद्वा इदमग्र आसीत्' । 'नास-दासीन्नो सदासीत्तदानीम्' इत्यादि ब्रह्मणोऽपि मिथ्यात्वे प्रमाण-मस्ति ।

न हि दृष्टेर्बलवत्किञ्चित्प्रमाणम् । न हि युक्तिपराजितोऽपि क्षुधितो नान्नमत्ति । बलवद्दृष्ट्यबाधे । न चान्नत्वे दुर्घटे तस्यानन्नत्वं

भवति । दृष्ट्यबाधितदृष्टस्य । न चान्नानन्नवैलक्षण्यमनुभूयते । न च तथा व्यवहारः । न च तत्र किञ्चिन्मानम् ।

अतो विशिष्टादिनिराकरणयुक्तीनामपि विशिष्टाद्यपेक्षत्वा-ज्ज्ञात्युत्तरमिति न युक्तिबाधाऽपि । अतो निखिलगुणगणाढ्यमेव ब्रह्म श्रुत्यभिप्रेतम् ।

अनिर्वचनीयासिद्धेरेवानुमानस्याप्यसिद्धिः । यदि जगन्मिथ्या स्यात्तदा दृश्यत्वाद्यनुमानस्यापि जगदन्तःपातित्वेन मिथ्यात्वाद-सिद्धिः स्यात् ।

वाचाऽऽरम्भणं विविधप्रकारः । नामधेयं नित्यं धार्यं नाम मृत्तिकेत्यादि वैदिकमेवेत्येतद् वचनं सत्यमिति श्रुतेरर्थः । अनित्य-त्वात् साङ्केतिकं नामाप्रधानं नित्यत्वान्मृत्तिकादिनामैव प्रधानम् । प्रधानज्ञानादप्रधानमपि ज्ञातार्थमिव भवति । एवं प्रधानस्य परमात्मनो ज्ञानादप्रधानं ज्ञातमिव भवति । प्राधान्यज्ञापनार्थमेव सृष्ट्यादिकथनम् । यथा सोम्येत्याद्यपि सादृश्यकथनम् । न चैकनखनिकृन्तनविकारः सर्वं कार्ष्णायसम् । प्रधानपुरुषज्ञानाद्ग्रामो ज्ञात इति व्यपदेशोऽस्ति ।

न हि सत्यज्ञानेन मिथ्याज्ञानं भवति । मुक्तामुक्तयोर्भेदाभावे मुक्तस्य संसारः संसारिणो मुक्तत्वं वा स्यात् । यद्यज्ञानकृतो भेदस्तर्हीश्वरस्याज्ञानाभावात् संसारिणैक्यं तेनानुभूयेत । ततश्च दुःखित्वं स्यात् ।

'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप' ।

'सुखं दुःखं भवोऽभावो भयं चाभयमेव च ।
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ॥
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' ।

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' ॥

इत्यादिनेश्वरेणापि भेदस्यैवानुभूयमानत्वाच्च । तत एवाभ्रान्तत्वान्न मुक्तस्यापि भेदनिवृत्तिः ।

न चोपाधिभेदमात्रेणेश्वरस्य दुःखाभावः । हस्तपादाद्युपाधिभेदेऽपि भोक्तुरेकत्वानुभवात् ।

'उद्यतायुधदोर्दण्डाः पतितस्वशिरोऽक्षिभिः ।
पश्यन्तः पातयन्ति स्म कवन्धा अप्यरीन्युधि' ॥

इति भारतवचनान्न विश्लेपाद्विशेषः ।

अतोऽनौपाधिकत्वादेव भेदस्य न मुक्तस्येश्वरैक्यम् ।

'इदं ज्ञनमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' ॥

'यदा पश्यः पश्यते रुग्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति' ॥

इ(त्यदि)ति मुक्तभेदवचनेभ्यश्च ।

एवं प्रत्यक्षानुमानागमविरुद्धत्वादभेदविषयवत् प्रतीयमानान्यपि वाक्यानि सादृश्याद्यर्थान्येव योजनीयानि ।

'विरुद्धवत्प्रतीयन्त आगमा यत्र वै मिथः ।
तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यते' ॥ इति ब्राह्मवचनाच्च ।

भेदाद्यनुभवस्य भ्रान्तित्वाङ्गीकारे तदपलापयुक्तेर्नितरां भ्रान्तित्वाद्भेदाद्यनुभवस्याभ्रान्तित्वमेव भवति । परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् । एकजीववादपक्षे तन्निष्ठानां मृत्यनन्तरमपि विश्वस्यानिवृत्तत्वाद्भेदनिष्ठ एवैकजीव इत्यापतति । तस्य च तत्रैवाग्रहान्न कदाचिद्भेदनिवृत्तिरित्यनिवृत्तिरेव भवति ।

न चैकजीवाज्ञानपरिकल्पिताः समस्ता इत्यत्र किञ्चिन्मानम् । अतो मुक्तेभ्योऽप्यन्य एव समस्तगुणपरिपूर्णो भगवान्विष्णुरिति सिद्धम् ।

'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।
तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे' ॥

'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' ।

सत्यचिच्चेत्यपतये मुक्तामुक्तोत्तमाय ते ।
नमो नारायणायार्यवृन्दवन्दितपद्द्वय ॥

आनन्दतीर्थपुंसिंहो मायावादिदितेःसुतान् ।
विदार्य युक्तिनखरैरप्रतीपो विभासते ॥

पलायध्वं पलायध्वं त्वरया मायिदानवाः ।
सर्वज्ञहरिरायाति तर्कागमदरारिभृत् ॥

द्रवत द्रवताऽशु मायिनः प्रविशध्वमतन्द्रिता गुहाः ।
कमलारमणाम्वराश्रयः समुदेत्यखिलज्ञभास्करः ॥

नृहरिः सकलज्ञनामकः समुपैति हि मायिदानवान् ।
प्रपलायनमत्र तत्क्षमं त्वरया वो वसतिर्गुहासु च ॥

जयत्यानन्दतीर्थेष्टदेवता नरकेसरी ।
विपाटिताज्ञानतमःकपाटात्युरुहुङ्कृतः ॥

जयत्यमितपौरुषः स्वजनतेष्टचिन्तामणिः ।
अजेशमुखवन्दितो गुणगणार्णवः श्रीपतिः ॥

सर्वज्ञसन्मुनीन्द्रोच्चसन्मनःपङ्कजालयः ।
अजितो जयति श्रीशो रमावाहुलताश्रयः ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः तत्त्वोद्योतः सम्पूर्णः ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# विष्णुतत्त्वविनिर्णयः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

सदागमैकविज्ञेयं समतीतक्षराक्षरम् ।
नारायणं सदा वन्दे निर्दोषाशेषसद्गुणम् ॥

विशेषणानि यानीह कथितानि सदुक्तिभिः ।
साधयिष्यामि तान्येव क्रमात् सज्जनसंविदे ॥

'ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् ।
मूलरामायणं चैव पुराणं चैतदात्मकम् ॥

ये चानुयायिनस्त्वेषां सर्वे ते च सदागमाः ।
दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः ॥

ज्ञेय एतैस्सदा युक्तैः भक्तिमद्भिः सुनिष्ठितैः ।
न च केवलतर्केण नाक्षजेन न केनचित् ।
केवलागमविज्ञेयो भक्तैरेव न चान्यथा ॥ इति ब्रह्माण्डे ।

'नावेदविन्मनुते तं बृहन्तं सर्वानुभूमात्मानं साम्पराये'
इति तैत्तिरीयश्रुतिः ।

'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ'
इति कठश्रुतिः ।

'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदाः'
इति पिप्पलादश्रुतिः ।

न चैतेषां वचनानामेवाप्रामाण्यम् । अपौरुषेयत्वाद् वेदस्य । 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति तद्गृहीतत्वाच्च ।

न चापौरुषेयं वाक्यमेव नास्तीति वाच्यम् । तदभावे सर्वसमयाभिमतधर्माद्यसिद्धेः । यस्य तौ नाभिमतौ नासौ समयी । समयप्रयोजनाभावात् । न च तेन लोकोपकारः । धर्माद्यभावज्ञाने परस्परहिंसादिना अपकारस्यैव प्राप्तेः । न चोपकारेण तस्य प्रयोजनम् । अदृष्टाभावात् । अतो धर्माद्यभावं वदता स्वसमयस्य आनर्थक्यमङ्गीकृतमेवेति नासौ समयी ।

न च पौरुषेयेण वाक्येन तत्सिद्धिः । अज्ञानविप्रलम्भयोः प्राप्तेः । न च तदर्थत्वेन सर्वज्ञः कल्प्येत । अन्यत्रादृष्टस्य सर्वज्ञत्वस्य कल्पनं तस्य अविप्रलम्भकत्वकल्पनं तस्य तत्कृतत्वकल्पनं चेति कल्पनागौरवप्राप्तेः ।

अपौरुषेयवाक्याङ्गीकारे न किञ्चित् कल्प्यम् । अपौरुषेयत्वं च स्वत एव सिद्धम् । वेदकर्तुः अप्रसिद्धेः । अप्रसिद्धौ च कर्तुः तत्कल्पने कल्पनागौरवम् । अकल्पनें चाकर्तृकत्वं सिद्धमेव । न च लौकिकवाक्यवत् सकर्तृकत्वम् । तस्य अकर्तृकत्वप्रसिद्ध्यभावात् । न च केनचित्कृत्वा वेद इत्युक्तं वेदसमम् । परम्पराऽभावात् । न च स्वयं प्रतिभातवेदैः दृष्टमवेदवाक्यं भवति । परम्परासिद्धवेदवाक्यानुसारित्वात् । वेदद्रष्टॄणामुक्तगुणवत्त्वाच्च तेषाम् । उक्तं च ब्रह्माण्डे–

'विंशल्लक्षणतोऽनूनः तपस्वी बहुवेदवित् ।
वेद इत्येव यं पश्येत् स वेदो ज्ञानदर्शनात्' ॥ इति ।

प्रामाण्यं च स्वतः एव । अन्यथा अनवस्थानात् । न चोक्तयुक्त्यधीनत्वं प्रामाण्यस्य । बुद्धिदोषनिरासमात्रकारणत्वात् युक्तीनाम् । अदुष्टबुद्धीनां स्वत एव सिद्धत्वात् च प्रामाण्यस्य । न चाऽकाङ्क्षायामेव प्रमाणान्तरापेक्षत्वात् अनवस्थाभाव इति वाच्यम् । आकाङ्क्षाया एव बुद्धिदोषात्मकत्वात् । दुष्टबुद्धीनामेव अप्रामाण्यशङ्केति परतोऽप्रामाण्यम् । प्रामाण्यं च स्वत एव सिद्धम् ।

न च उच्चारणकाल एव वर्णानामुत्पत्तिरिति वाच्यम् । तदेवेदं वचनमिति प्रत्यभिज्ञाविरोधात् । न च सादृश्यात् प्रत्यभिज्ञा भ्रान्तिरिति वाच्यम् । 'सोऽयं देवदत्तः' इत्यादेरपि तथात्वप्राप्तेः । सर्वक्षणिकत्वं वदता बौद्धेन सेयं दिगित्यादिप्रत्यभिज्ञाया भ्रान्तित्वं न वाच्यम् । पञ्चस्कन्धेभ्यः अन्यत्वात् । न च दिशः एव भ्रान्तिकल्पिताः । विज्ञानशून्ययोरपि साम्यात् । न च आदित्योदयादिनैव दिक्कल्पना, अन्धकारेऽपि दिङ्मात्रप्रतीतेः । कादाचित्कभ्रान्तिरेव आदित्योदयादिदर्शनान्निवार्यते । सा च विज्ञानशून्ययोरपि भवतीति तेषां मतम् । वादिविप्रतिपत्तेः । अतो दिशः स्थिरा एवेति सिद्ध्यति शून्यवदेव । अतस्तद्वद्वेदस्यापि स्थैर्यं सिद्धम् । तदेवेदं वाक्यमिति प्रत्यभिज्ञानात् ।

न चानुमानादीनामागमं विना प्रामाण्यं धर्मादिषु । तदगोचरत्वात् ।

अतः अपौरुषेयवाक्येनैव धर्मादिसिद्धेः सर्ववादिनामपि तदङ्गीकार्यम् ।

तत्प्रामाण्यं च स्वत एव सिद्धम् । अप्रामाण्यस्य च परतस्त्वा-

नङ्गीकारे दुष्टेन्द्रियादेरप्यप्रामाण्यहेतुत्वं न स्यात् । तदनङ्गीकारे च अनुभवविरोधः । अतः प्रामाण्यं स्वतः अप्रामाण्यं परतः इति सिद्धम् ।

'वाचा विरूपनित्यया'

'नित्ययाऽनित्यया स्तौमि ब्रह्म तत्परमं पदम्' इति ।

'श्रुतिर्वाव नित्या अनित्या वाव स्मृतयः याश्चान्या वाचः' ।

इति पैङ्गिश्रुतिः ।

'विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः ।
अनादिनित्या सा तच्च विना तां न स गम्यते' ॥

इति कात्यायनश्रुतिः ।

'सहस्रधा महिमानः सहस्रं यावद्ब्रह्मविष्ठितं तावती वाक्' ।

'कश्छन्दसां योगमावेद धीरः को धिष्ण्यां प्रतिवाचं पपाद' ।

इत्यादि च ।

'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः ।
सर्गे सर्गेऽमुनैवेत उद्गीर्यन्ते तथैव च ।
तत्क्रमेणैव तैर्वर्णैः तैः स्वरैरेव नान्यथा ।
अतः श्रुतित्वमेतासां श्रुता एव यतोऽखिलैः ।
जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः ।
मुनीनां प्रतिभास्यन्ति भागेनैव न सर्वशः ॥

यतस्ता हरिणा दृष्टाः श्रुता एवापरैर्जनैः ।
श्रुतयो दृष्टयश्चेति तेनोच्यन्ते पुरातनैः ॥

तदुत्पत्तिवचश्चैव भवेद्व्यक्तिमपेक्ष्य तु ।
चेतनस्य जनिर्यद्वदुच्यते सर्वलौकिकैः ॥

पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु ।
क्रियन्तेऽतस्त्वनित्यानि तदर्थाः पूर्वसर्गवत् ।
वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षया ।
अवान्तराभिमानानां देवानां वा व्यपेक्षया ॥
नानित्यत्वात् कुतस्तेषामनित्यत्वं स्थिरात्मनाम्' ।

इति ब्रह्माण्डे ।

न चानित्यत्वे श्रुतिर्वेद इत्यादि विशेषशब्द उपपद्यते ।

'वेदास्ते नित्यविन्नत्वात् श्रुतयश्चाखिलैः श्रुतेः ।
आम्नायोऽनन्यथापाठादीशबुद्धिस्थिताः सदा' ॥

इति महावाराहे ।

न च नित्यत्वं विना वेदानां दर्शनव्यवहारो युज्यते ।

न च वर्णपदादीनामनित्यत्वं वक्तुं युक्तम् । सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात् । न च घटादिवत् संस्कारमात्रत्वं वक्तुं युक्तम् । प्रत्यभिज्ञाविरोधस्य उक्तत्वात् । पुराणानामपि अन्यथा शब्दरचनमेवानित्यत्वम् ।

अतः आकाशगुणे शब्दे व्यज्यमाना वर्णादयः तत्क्रमात्मको वेदश्च नित्य एवेति सिद्धम् ।

न च केवलसिद्धेऽर्थे व्युत्पत्त्यभावादप्रामाण्यम् । सिद्धान्वित एव व्युत्पत्तिगृहीतेः । इयं माता अयं पितेत्यादौ अङ्गुलिप्रसारणादि-

पूर्वकनिर्देशेनैव हि तज्ज्ञानाति । कार्यान्वित एव व्युत्पत्तिरिति वदतः कार्यस्य कार्यान्वयाभावात् कल्पनागौरवम् । इयं माता अयं पिता सुरूपोऽसीत्यादौ सिद्धमात्रज्ञापनेन पर्यवसितत्वाद् वाक्यस्य । तस्य तत्र प्रामाण्यानुभवाच्च । न च कुत्रचित् सिद्धज्ञापनाद् अन्यत् वाक्यस्य प्रयोजनम् । ज्ञात्वैव हि इष्टसाधनतां प्रवर्तते निवर्तते च विपर्ययेण । अतः सिद्ध एव सर्ववाक्यानां प्रामाण्यं सिद्धम् ।

प्रसिद्धं च व्याकरणनिरुक्तादीनां सिद्धमात्रे प्रामाण्यं सर्ववादिनाम् । तदनङ्गीकारे च सर्वशाब्दव्यवहारासिद्धिः । उक्तं च नारदीये–

'सर्वज्ञं सर्वकर्तारं नारायणमनामयम् ।
सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि ।
सर्वेषामपि वेदानामितिहासपुराणयोः ।
प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते' ॥ इति ।

न च जीवेश्वराभेद एव तात्पर्यमागमस्य । तत्र प्रमाणाभावात् । न च जीवेश्वरभेदः सिद्धः इत्यनुवादकत्वं भेदवाक्यानाम् । आगमं विना ईश्वरस्यैव असिद्धेः । न च अनुमानात् तत्सिद्धिः । विपर्ययेणापि अनुमातुं शक्यत्वात् । विमतं सकर्तृकं कार्यत्वाद् घटवत् इत्युक्ते विमतं विकर्तृकं अस्मत्सम्मतकर्तृरहितत्वात् आत्मवत् इत्यनुमानविरोधात् । अकार्यत्वमुपाधिरित्युक्ते शरीरिजन्यत्वमितरत्रापि उपाधिरित्युत्तरम् ।

प्रत्यक्षानुमानसिद्धत्वे च भेदस्य तद्विरोधादेव अप्रामाण्यमभेदा-

गमस्य । तेन अभेदागमस्याप्रामाण्याभावे नानुवादकत्वं भेद-वाक्यानाम् । नहि बलवतोऽनुवादकत्वं दार्ढ्यहेतुत्वात् ।

प्रत्यक्षादेः आगमस्य प्रावल्येऽपि नोपजीव्यप्रमाणविरोधे प्रामाण्यम् । विषयाभावे स्वस्यैव अप्रामाण्यप्राप्तेः । तेनैव हि अनुमानादिना आगमस्य विषयः सिद्ध्यति तत्पक्षेऽपि ।

अनुमानेन हि अनुवादित्वपक्ष ईश्वरः बोद्धव्यः प्रत्यक्षेण च आगमः । अतस्तयोर्विरोधे प्रामाण्यं न स्यात् । अनुमानसिद्धेश्वराच्च भेदोऽनुभवत एव सिद्धः । जीवस्यासर्वकर्तृत्वेनानुभवात् ।

न च अनुभवविरोधे आगमस्य प्रामाण्यम् । आगमप्रामाण्यानु-भवस्याप्यप्रामाण्यप्राप्तेः ।

वहुप्रमाणसंवादश्च दार्ढ्यहेतुरेव । वहूनां वचने तस्यैव दर्शने दार्ढ्यस्यैव दृष्टेः ।

सर्वाविवादस्थल एव कथञ्चिदनुवादकत्वम् । न चात्र सर्वा-विवादः एकत्ववादिनामेव विवाददर्शनात् । बहुप्रमाणविरोधे च एकस्याप्रामाण्यं दृष्टं शुक्तिरजतादौ । न च दोषजन्यत्वादेव दुर्वलत्वमिति विरोधः । वहुप्रमाणविरुद्धानां दोषजन्यत्वनियमात् । दोषजन्यत्वं च वलवत्प्रमाणविरोधादेव ज्ञायते ।

अदुष्टमिन्द्रियं त्वक्षं तर्कोऽदुष्टस्तथाऽनुमा ।
आगमोऽदुष्टवाक्यं च स्वदृक् चानुभवः स्मृतः ॥

वलवत्प्रमाणतश्चैव ज्ञेया दोपा न चान्यथा ।
द्विविधं वलवत्त्वं च वहुत्वाच्च स्वभावतः ॥

तयोः स्वभावो बलवानुपजीव्यादिकश्च सः ।
याथार्थ्यमेव प्रामाण्यं तन्मुख्यं ज्ञानशब्दयोः ॥

ज्ञानं च द्विविधं बाह्यं तथाऽनुभवरूपकम् ।
बल्येवानुभवस्तत्र निर्दोषं त्वक्षजादिकम् ॥

अनुप्रमाणतां याति तथाऽक्षादित्रयं ततः ।
प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ।
उपजीव्यविरोधे तु न प्रामाण्यममुष्य च ॥

यामाहुरनुमां केचित् त्रियाद्यवयवात्मिकाम् ।
सा व्यर्था नोपपत्त्या हि विना सापि प्रमाणताम् ॥

यात्यतो युक्तिरेवैका प्रमाणमनुमात्मकम् ।
युक्तिः प्रतिज्ञारूपा च हेतुदृष्टान्तरूपिका ॥

तथोपनयरूपा च परा निगमनात्मिका ।
पृथक् पृथक् प्रमाणत्वं याति युक्तितयैव तु ।
प्रतिज्ञा हेतुगर्भैव पृथक् प्रामाण्यमेष्यति ॥

सिद्धत्वेन प्रतिज्ञाया हेतुर्मानं पृथग् भवेत् ।
प्रतिज्ञावयवत्वात्तु स्वातन्त्र्येणैव मानताम् ॥

दृष्टान्तो यात्युपनयो व्याप्तिमाश्रित्य केवलम् ।
व्याप्तिस्तु केवलाऽपि स्यात् प्रमाणं नियमाश्रयात् ॥

तथा निगमनं चोपसंहारैकस्वरूपतः ।
प्रामाण्यं यात्यनुभवो ज्ञापयत्युपपत्तिताम् ॥

विरोधश्च तथाऽधिक्यं न्यूनताऽसङ्गतिस्तथा ।
उपपत्तिदोषा विज्ञेया विरोधश्च स्वतोऽन्यतः ॥

जनकस्यात्ययो जातिः स्वस्य वाऽन्यस्य वा भवेत् ।
जनकं प्रमाणमुद्दिष्टं स्वस्यार्थस्य प्रकाशनात् ॥

निग्रहाः एत एव स्युः संवादानुक्तिसंयुताः ॥

अर्थतः प्राप्तिरेवार्थापत्तिरित्यभिधीयते ।
दृष्ट्वा सदृशमेवान्यं पूर्वदृष्टे तु वस्तुनि ॥

एतत्सदृशताज्ञानमुपमानं प्रकीर्तितम् ।
अभावस्य परिज्ञानं द्विविधं समुदाहृतम् ॥

एकं तत्रानुभवतः योग्यस्यानुपलब्धितः ।
द्वितीयमपि विज्ञेयं सुखाद्ये च घटदिके ॥

एकं प्रत्यक्षरूपं स्यात् द्वितीयमनुमात्मकम् ।
क्वचिद् घटाद्यभावोऽपि प्रत्यक्षेणावगम्यते ॥

झटित्येव परिज्ञानात् न लिङ्गोद्भवता मता ।
अर्थापत्तिश्चोपमा च ह्यनुमाभेद एव तु ।
आगमो द्विविधो ज्ञेयो नित्योऽनित्यस्तथैव च ॥

प्रत्यक्षं त्रिविधं ज्ञेयं ऐश्वरं यौगिकं तथा ।
अयौगिकं चेति तथा सर्वमक्षात्मकं मतम् ॥

अक्षाणि च स्वरूपाणि नित्यज्ञानात्मकानि च ।
विष्णोः श्रियस्तथैवोक्तान्यन्येषां द्विविधानि तु ॥

स्वरूपाणि च भिन्नानि भिन्नानि त्रिविधानि च ।
दैवासुराणि मध्यानीत्येतत्प्रत्यक्षमीरितम् ॥

विषयान् प्रति स्थितं ह्यक्षं प्रत्यक्षमिति कीर्तितम् ।
अक्षयं पुरुषस्याक्षं स्वरूपे मुख्यमेव तु ॥

उपचारस्तदन्यत्र सृष्टावुपचयो यतः ।
उपपत्तिस्वरूपत्वादनुमा सम्भवादिकम् ॥

प्रत्यक्षागममाहात्म्यादनुमानं प्रमाणताम् ।
याति नैवान्यथा तस्य नियतत्वं क्वचिद् भवेत् ॥ इति ब्रह्मतर्के ।

अत्र चोपजीव्यत्वेन प्रमाणप्राबल्यात् भेद एव तात्पर्यं युक्तम् । कथञ्च अनुवादकत्वं भेदस्य प्रमाणेन असिद्धौ ? सिद्धौ च कथं अभेदवाक्यस्य अबाधः ? न च अप्रमाणसिद्धेन अनुवादकत्वं प्रमाणस्य भवति । दुर्बलत्वे च भेदप्रमाणस्य आभासत्वात् न भेदवाक्यानामनुवादित्वम् । अतश्च भेदवाक्यानामेव प्राबल्यम् ।

सर्वप्रमाणविरुद्धवचनानामेव प्राबल्याङ्गीकारे 'इदं वा अग्रे नैव किञ्चन आसीत् असतः सदजायत' इत्यादीनामेव अविचारेण प्रतीयमानस्य अर्थस्य सर्वप्रमाणविरुद्धत्वात् तत्र सर्वागमानां महातात्पर्यं प्रसज्येत ।

न च तत्र युक्तिविरोध इति वाच्यम् । तस्मिन् पक्षे युक्ति-विरुद्धत्वेन अननुवादित्वमिति गुण एव स्यात् । युक्तिसिद्धत्वे हि अनुवादित्वं स्यात् । अतः प्रमाणसिद्धत्वे तदपलापायुक्तेः

अप्रमाणसिद्धत्वे च भेदप्रमाणस्य अनुवादित्वाभावाच्च न भेद-वाक्यानां दौर्बल्यम् ।

न च प्रमाणवहुत्वे दौर्बल्यम् । दार्ढ्यमेव हि बहुवाक्यसंवादे दृष्टम् । तथा सति अभ्यासादेः अप्रमाण्यहेतुत्वं स्यात् । अभ्यासस्य च तात्पर्यलिङ्गत्वं सर्वेषां सिद्धम् । तदनङ्गीकारे तत्पक्षेऽपि नवकृत्वस्तत्त्वमसि इत्यभ्यासस्य अनुवादकत्वेन अप्रामाण्यं स्यात् । प्रथमवाक्येनैव यस्यासिद्धं तदर्थमपरमित्युक्ते प्रत्यक्षादिना भेदः येन अनिश्चितस्तदर्थमपरं वाक्यमित्युत्तरम् । तस्मात् वहुप्रमाणसंवादित्वे प्राबल्यमेव ।

अतः सर्वप्रमाणविरुद्धत्वात् न अभेदे तात्पर्यं वाक्यस्य किन्तु विष्णोः सर्वोत्तमत्व एव महातात्पर्यं सर्वागमानाम् ।

तथा चोक्तं भगवता–

'द्वविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ।
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।
यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ।
इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद् वुद्ध्वा वुद्धिमान् स्यात् कृतकृत्यश्च भारत' ॥ इति ।

'सर्वोत्कर्षे देवदेवस्य विष्णोः महातात्पर्यं नैव चान्यत्र सत्यम् ।
अवान्तरं तत्परत्वं तदन्यत् सर्वागमानां पुरुषार्थस्ततोऽतः' ॥
इति पैङ्गिश्रुतिः ॥

'मुख्यं च सर्ववेदानां तात्पर्यं श्रीपतेः परम् ।
उत्कर्षे तु तदन्यत्र तात्पर्यं स्यादवान्तरम्' ॥ इति महावराहे ।

युक्तश्च विष्णोः सर्वोत्तमत्व एव महातात्पर्यं सर्वागमानाम् । मोक्षो हि सर्वपुरुषार्थोत्तमः ।

'धर्मार्थकामास्सर्वेऽपि न नित्याः मोक्ष एव हि ।
नित्यस्तस्मात् तदर्थाय यतेत मतिमान् नरः' ॥
इति भाल्लवेयश्रुतिः ।

'अनित्यत्वात् सदुःखत्वान्न धर्माद्याः परं सुखम् ।
मोक्ष एव परानन्दः संसारे परिवर्तताम्' ॥ इति भारते ।

मोक्षश्च विष्णुप्रसादेन विना न लभ्यते ।

'यस्य प्रसादात् परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण ।
नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मात्' ॥
इति नारायणश्रुतिः ।

'नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्' ॥
इति कठश्रुतिः ।

'तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम्' ॥
इति भगवद्वचनम् ।

'उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षौ च पुरुषात् यस्मात्स हरिरेकराट्' ॥ इति स्कान्दे ।

'अज्ञानां ज्ञानदो विष्णुः ज्ञानिनां मोक्षदश्च सः ।
आनन्ददश्च मुक्तानां स एवैको जनार्दनः' ॥ इति च ।

'बन्धको भवपाशेन भवपाशाच्च मोचकः ।
कैवल्यदः परं ब्रह्म विष्णुरेव न संशयः' ॥ इति च ।

प्रीतिश्च गुणोत्कर्षज्ञानादेव विशेषतः दृष्टा न अभेदज्ञानात् । अभेदज्ञानादप्रीतिरेवोत्तमानां भवति । घातयन्ति हि राजानः राजा अहमिति वदन्तम् । ददति च सर्वमभिप्रेतं गुणोत्कर्षं वदतः ।

'न तादृशी प्रीतिरीड्यस्य विष्णोः
गुणोत्कर्षज्ञातरि यादृशी स्यात् ।
तत्प्रीणनात् मोक्षमाप्नोति सर्वः
ततो वेदास्तत्पराः सर्व एव' ॥ इति सौपर्णश्रुतिः ।

'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति मां सर्वभावेन भारत' ॥

इति गुणोत्कर्षज्ञानादेव परमा प्रीतिर्भगवता स्वयमेवाभिहिता ।

अतो विष्णोर्गुणोत्कर्ष एव सर्वश्रुतिस्मृतीनां महातात्पर्यम् ।
न चाभेदे तात्पर्यमित्यत्र किञ्चिन्मानम् ।

न च विशेषणविशेष्यतया भेदसिद्धिः । विशेषणविशेष्यभावश्च भेदापेक्षः । धर्मिप्रतियोग्यपेक्षया भेदसिद्धिः । भेदापेक्षं च धर्मिप्रतियोगित्वमित्यन्योन्याश्रयतया भेदस्यायुक्तिः । पदार्थस्वरूपत्वात्

भेदस्य । न च धर्मिप्रतियोग्यपेक्षया भेदस्यास्वरूपत्वम् ऐक्यवत् स्वरूपस्यैव तथात्वात् । स्वरूपसिद्धावपि तदसिद्धिश्च जीवेश्वरैक्यं वदतः सिद्धैव । भेदस्तु स्वरूपदर्शन एव सिद्धः । प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपं दृश्यते । अस्य भेद इति तु पदार्थस्य स्वरूपमितिवत् । यदि न स्वरूपं भेदस्तदा पदार्थे दृष्टे प्रायः सर्वतो वैलक्षण्यं तस्य न ज्ञायेत। अज्ञाते च वैलक्षण्ये आत्मनि घट इत्यपि संशयः स्यात् । न हि कश्चित्तथा संशयं करोति । ज्ञात्वैव प्रायः सर्वतो वैलक्षण्यं कस्मिंश्चिदेव सदृशे संशयं करोति । न ह्यात्मन्यहं देवदत्तो न वा इति कश्चित् संशयो भवति । सामान्यतः सर्ववैलक्षण्ये ज्ञाते एव घटत्वादिज्ञानम् । अतः न अन्योन्याश्रयता ।

न च युगपत् ज्ञानानुत्पत्तिर्दोषः । यथा युगपदेव दीपसहस्रदर्शने सामान्यतः सर्वे ज्ञायन्त एव तथा स्यात् । एकस्मिन्नेव वस्तुनि विशेषस्तैरप्यङ्गीकृत एव । नेति नेति इत्यत्र सर्ववैलक्षण्याङ्गीकारात् । विशेषानङ्गीकारे च पुनरुक्तेः । न च घटाद् वैलक्षण्यमेव पटाद् वैलक्षण्यम् । अनुभवविरोधात् । तस्माद्भेददर्शनं युक्तमेव ।

यच्च प्रमाणदृष्टानामपि पदार्थानां मिथ्यात्वकल्पनं तच्च प्रमाणविरुद्धत्वादेव प्रकाशतस्करत्वम् ।

नहि प्रमाणदृष्टस्य तर्कबाध्यत्वम् । प्रत्यक्षादिविरुद्धानां तर्काभासत्वनियमात् । शुक्त्यादेः रजतत्वादिप्रतीतेरपि बलवत्प्रत्यक्षविरुद्धत्वादेव भ्रमत्वं न तर्कमात्रात् ।

तर्कमात्रतः प्रत्यक्षबाधने भूतचतुष्टयस्यावादेः पृथिवीत्वादृष्टेः पृथिव्या अपि पृथिवीत्वं न स्यात् । अतः न तर्कमात्रत एव दृष्टस्य

भ्रान्तित्वं कल्प्यम् । अतः सर्वभेदनिरासकतर्कस्य सर्वश्रुतिस्मृति-प्रत्यक्षानुमानविरुद्धत्वात् नितरां आभासत्वम् ।

न च परमार्थतो भेदाभावः व्यावहारिकः सोऽस्तीति वाच्यम् । सदसद्वैलक्षण्ये प्रमाणाभावात् । असतः ख्यात्ययोगादिति वदतः ख्यातिः अभून्न वा । यदि नाभूत् न तत्ख्यातिनिराकरणम् । यद्यभूत् तथापि । न चासतः वैलक्षण्यं तत्प्रतीतिं विना ज्ञायते ।

न च शुक्ते रजतत्वं सदसद्विक्षणम् । असदेव रजतं प्रत्यभात् इत्यनुभवात् । न च प्रतीतत्वादसत्त्वाभावः । असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरिति अन्यथाप्रतीतेरेव भ्रान्तित्वात् ।

न च असतः भ्रान्तावपि प्रतीतिः नास्तीति वाच्यम् । अनिर्वचनीयपरमार्थत्वस्य असतः एव दृष्ट्यङ्गीकारात् न च तदप्यनिर्वाच्यम् अनवस्थितेः । प्रथमानिर्वचनीयासिद्ध्या सर्वानिर्वचनीयासिद्धिरिति मूलक्षतिः । अनिर्वचनीयत्वे रजतस्यानिर्वचनीयमिदं रजतमिति बाधकज्ञानमुत्पद्येत । मिथ्याशब्दस्तु अभाववाची ।

न च सदसद्वैलक्षण्यं नामास्तीत्यत्र किञ्चिन्मानम् । अनुभवविरोधश्च तत्पक्षे । सदसतोः द्वयोरेव सर्वैरनुभूयमानत्वात् । अतः अनिर्वचनीयाभावात् असतः प्रतीत्यनङ्गीकारात् प्रतीयमानत्वाच्च भेदस्य सत्त्वप्राप्तेः न अद्वितीयत्वं युज्यते ।

कथञ्च श्रुतिसिद्धः जीवपरमात्मभेदः निराक्रियते ? मिथ्यावादित्वे च श्रुतेः कथं ऐक्यस्य सत्यत्वम् ? कथञ्चैवंवादिनां वेदवादित्वम् ? वेदोक्तस्य मिथ्यात्वाङ्गीकारादेव हि अवेदवादित्वं

बौद्धादीनामपि । अतः विष्णोः सर्वोत्तमत्व एव महातात्पर्यं सर्वागमानाम् ।

कथञ्च जीवपरमात्मैक्ये सर्वश्रुतीनां तात्पर्यं युज्यते ? सर्वप्रमाणविरुद्धत्वात् । तथा हि अनुभवविरोधः । न ह्यहं सर्वज्ञः सर्वेश्वरो निर्दुःखः निर्दोपः इति कस्यचित् अनुभवः । अस्ति च तद्विपर्ययेण अनुभवः । न च मिथ्यानुभवोऽयम् । तद्विपरीतप्रमाणाभावात् ।

न चाभेदे कश्चिदागमः । सन्ति च भेदे सर्वागमाः ।

[ अतत् त्वमसीति नवकृत्वोपदेशः ]

तथाहि 'अतत् त्वं असि' इति नवकृत्वोपदेशः सदृष्टान्तकः । न चायं अभेदोपदेशः ।

[ शकुनिसूत्रदृष्टान्तः ]

स यथा शकुनिः सूत्रेण प्रवद्धः दिशं दिशं पतित्वा अन्यत्रायतनमलब्ध्वा बन्धनमेवोपाश्रयते । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ १ ॥

[ मधुमक्षिकादृष्टान्तः ]

यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसानां समवहारमेकतां गमयन्ति ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्मि अमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पत्स्यामह इति । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो

वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तत्तदा भवन्ति ॥ २ ॥

[ नदीसमुद्रदृष्टान्तः ]

इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यः ताः समुद्रात् समुद्रमेवापियन्ति । सः समुद्र एव भवति । ता यथा तत्र न विदुः इयमहमस्मि इयमहमस्मीति । एवमेव खलु सोम्येमास्सर्वाः प्रजाः सतः आगम्य न विदुः सत आगच्छामह इति । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तत्तदा भवन्ति ॥३॥

[ वृक्षदृष्टान्तः ]

स एष जीवेनात्मना अनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति । यस्य यदैकां शाखां जीवो जहाति अथ सा शुष्यति ॥ ४ ॥

[ न्यग्रोधफलदृष्टान्तः ]

न्यग्रोधफलमत आहरेति इदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीति अण्व इव इमा धाना भगव इति आसां अङ्ग एकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति । तं होवाच यं वै सोम्य एतमणिमानं न निभालयसे अस्य सोम्यैषोऽणिम्नः एवं महान् न्यग्रोधस्तिष्ठति ॥ ५ ॥

[ लवणोदकदृष्टान्तः ]

'लवणमेतदुदके अवधाय अथ मा प्रातरुपसीदथा इति तद्ध तथा चकार तं होवाच यद्दोपा लवणमेतदुदकेऽवधा अङ्ग तदाहरेति

तद्धावमृश्य न विवेद यथा विलीनमेव अङ्ग अस्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमिति अन्त्यादाचामेति कथमिति लवणमिति अभिप्रास्यैतदथ मा उपसीदथा इति तद्ध तथा चकार तत् शश्वत् संवर्तते । तं होवाचात्र वाव किल सत् सोम्य न निभालयसे अत्रैव किलेति' ॥ ६ ॥

[ गान्धारपुरुष – आसन्नमरणस्तेन – दृष्टान्ताः ]

'यथा सोम्य पुरुषं गन्धारेभ्यः अभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्' ॥ ७ ॥

'अथ यदास्य वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावन्न विजानाति' ॥ ८ ॥

'पुरुषं सोम्योत हस्तगृहीतमानयन्ति अपहार्षीत् स्तेयमाकर्षीत् परशुमस्मै तपतेति । स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमभिसन्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यते अथ हन्यते । अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते । स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यते अथ मुच्यते' ॥९॥

एवमेव खलु सोम्य आचार्यवान् पुरुषो वेदेति स्थाननवकेऽपि भेद एव दृष्टान्ताभिधानात् ।

नहि शकुनिसूत्रयोः नानावृक्षरसानां नदीसमुद्रयोः जीववृक्षयोः अणिमधानयोः लवणोदकयोः गन्धारपुरुषयोः अज्ञप्राणादिनियामकयोः स्तेनापहार्ययोरैक्यम् ।

सति सम्पद्य न विदुः सति सम्पत्स्यामह इति, त इह व्याघ्रो वा सिंहो वेति, सत आगस्य न विदुः सत आगच्छामह इति, त इह व्याघ्रो वा सिंहो वेति भेदापरिज्ञानेन अनर्थवचनाच्च ।

न हि गृहादागतस्य गृहे प्रविष्टस्य च तदैक्यम् । 'ताः समुद्रात् समुद्रमेवापियन्ति स समुद्र एव भवति' इत्यत्रापि भेद एवोच्यते । अन्यथा ताः समुद्र एव भवन्तीति व्यपदेशः स्यात् । अतः नद्यः समुद्रादागच्छन्ति तं प्रविशन्ति च समुद्रस्तु स एव नैतासां समुद्रत्वं भवतीत्यर्थः । न हि भिन्नानां नदीजलपरमाणूनां समुद्राणुभिः ऐक्यं युज्यते । तथासति महाजनसमितौ प्रविष्टनां द्वित्राणां तदैक्यं स्यात् । न च तद्युज्यते । भेदेनानुभवात् ।

स्वं हि अपीतो भवतीत्यत्रापि स्व इति परमात्मनः अभिधानम् । 'स्वात्मना चोत्तारयोः' इति सूत्रात् ।

'स्वातन्त्र्यात् स्व इति प्रोक्तः आत्माऽयं चाततत्वतः ।
ब्रह्माऽयं गुणपूर्णत्वात् भगवान् विष्णुरव्ययः' ॥

इति परमोपनिषदि ।

अपीत इत्यत्रापि प्रवेशमात्रम् । स्वमिति द्वितीयानिर्देशात् । एकीभावविवक्षायां स्वेनेति निर्देशः स्यात् ।

'स्वं कुलायं यथाऽपीतः पक्षी स्यादेवमीश्वरम् ।
अप्येति जीवः प्रस्वापे मुक्तौ चान्योऽपि सन् सदा' ॥ इति च ।

एवमेव खलु सोम्य एतन्मनो दिशं दिशं पतित्वा अन्यत्रायतनमलब्ध्वा प्राणमेव उपाश्रयत इत्यत्रापि मन इति जीवः प्राणः इति परमात्मा । यत्रायं पुरुषः स्वपिति नाम इति तयोरेव प्रस्तुतत्वात् ।

'मननान्मन उद्दिष्टः पुद्गलो निरयं गिरन् ।
कर्मानुशयनाच्चैव संसार्यनुशयी स्मृतः' ॥ इति च ।

'प्राणः प्रणयनादेव साधुत्वात् सन् हरिः स्मृतः' । इति च ।

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इत्यत्रापि भेद एव प्रतीयते ।

'स्रष्टृत्वादाश्रयत्वाच्च मुक्तानां च प्रति प्रति ।
स्थापनाच्च विभुर्विष्णुः अन्यः संसारिणो मतः' ॥ इति च ।

अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणीति स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानः मोदमानस्तिष्ठति इत्यत्रापि जीवशब्देन परमात्मा अभिहितः । 'जीव इति भगवतः अनिरुद्धस्य आख्या' इति श्रुतेः ।

'विष्णुर्जीव इति प्रोक्तः सततं प्राणधारणात् ।
स प्रविश्य शरीरं च स्थावरं जङ्गमं तथा ॥

महाभूतानि च विभुः त्रिवृत्करणपूर्वकम् ।
संसारिणं भ्रामयति सदैवान्यत्वलक्षणम् ॥

तेनायं मोदते नित्यं वृक्षावस्थां गतोऽपि सन्' । इति च ।

तत्तेज ऐक्षत ता आप ऐक्षन्त इमास्तिस्रो देवता इति पूर्वमेव चेतनत्वसिद्धेः, अनेन जीवेनात्मनेति संसारिणः पुनः प्रवेशः न युक्तः । अतस्तत्र जीवशब्देन परमात्मैवाभिहितः ।

जीवेनात्मानानुप्रभूतः पेपीयमानः मोदमानस्तिष्ठतीत्यत्रापि

सति सम्पद्य न विदुः सति सम्पत्स्यामह इति, त इह व्याघ्रो वा सिंहो वेति, सत आगस्य न विदुः सत आगच्छामह इति, त इह व्याघ्रो वा सिंहो वेति भेदापरिज्ञानेन अनर्थवचनाच्च ।

न हि गृहादागतस्य गृहे प्रविष्टस्य च तदैक्यम् । 'ताः समुद्रात् समुद्रमेवापियन्ति स समुद्र एव भवति' इत्यत्रापि भेद एवोच्यते । अन्यथा ताः समुद्र एव भवन्तीति व्यपदेशः स्यात् । अतः नद्यः समुद्रादागच्छन्ति तं प्रविशन्ति च समुद्रस्तु स एव नैतासां समुद्रत्वं भवतीत्यर्थः । न हि भिन्नानां नदीजलपरमाणूनां समुद्राणुभिः ऐक्यं युज्यते । तथासति महाजनसमितौ प्रविष्टनां द्वित्राणां तदैक्यं स्यात् । न च तद्युज्यते । भेदेनानुभवात् ।

स्वं हि अपीतो भवतीत्यत्रापि स्व इति परमात्मनः अभिधानम् । 'स्वात्मना चोत्तारयोः' इति सूत्रात् ।

'स्वातन्त्र्यात् स्व इति प्रोक्तः आत्माऽयं चाततत्वतः ।
ब्रह्माऽयं गुणपूर्णत्वात् भगवान् विष्णुरव्ययः' ॥

इति परमोपनिषदि ।

अपीत इत्यत्रापि प्रवेशमात्रम् । स्वमिति द्वितीयानिर्देशात् । एकीभावविवक्षायां स्वेनेति निर्देशः स्यात् ।

'स्वं कुलायं यथाऽपीतः पक्षी स्यादेवमीश्वरम् ।
अप्येति जीवः प्रस्वापे मुक्तौ चान्योऽपि सन् सदा' ॥ इति च ।

एवमेव खलु सोम्य एतन्मनो दिशं दिशं पतित्वा अन्यत्रायतनमलब्ध्वा प्राणमेव उपाश्रयत इत्यत्रापि मन इति जीवः प्राणः इति परमात्मा । यत्रायं पुरुषः स्वपिति नाम इति तयोरेव प्रस्तुतत्वात् ।

'मननान्मन उद्दिष्टः पुद्गलो निरयं गिरन् ।
कर्मानुशयनाच्चैव संसार्यनुशयी स्मृतः' ॥ इति च ।

'प्राणः प्रणयनादेव साधुत्वात् सन् हरिः स्मृतः' । इति च ।

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इत्यत्रापि भेद एव प्रतीयते ।

'स्रष्टृत्वादाश्रयत्वाच्च मुक्तानां च प्रति प्रति ।
स्थापनाच्च विभुर्विष्णुः अन्यः संसारिणो मतः' ॥ इति च ।

अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणीति स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानः मोदमानस्तिष्ठति इत्यत्रापि जीवशब्देन परमात्मा अभिहितः । 'जीव इति भगवतः अनिरुद्धस्य आख्या' इति श्रुतेः ।

'विष्णुर्जीव इति प्रोक्तः सततं प्राणधारणात् ।
स प्रविश्य शरीरं च स्थावरं जङ्गमं तथा ॥

महाभूतानि च विभुः त्रिवृत्करणपूर्वकम् ।
संसारिणं भ्रामयति सदैवान्यत्वलक्षणम् ॥

तेनायं मोदते नित्यं वृक्षावस्थां गतोऽपि सन्' । इति च ।

तत्तेज ऐक्षत ता आप ऐक्षन्त इमास्तिस्रो देवता इति पूर्वमेव चेतनत्वसिद्धेः, अनेन जीवेनात्मनेति संसारिणः पुनः प्रवेशः न युक्तः । अतस्तत्र जीवशब्देन परमात्मैवाभिहितः ।

जीवेनात्मानानुप्रभूतः पेपीयमानः मोदमानस्तिष्ठतीत्यत्रापि

जीवशब्दोदितः पर एव । पेपीयमानः मोदमानस्तु संसारी । न हि चेतनादन्यस्य मोदभोगादिकं युज्यते ।

'सुखस्य चाप्यायतनं शरीरं दुःखस्य चाप्ययतनं शरीरम् ।
अचेतनं प्राकृतमेतदाहुः भोक्ता तयोः चेतनकः शरीरी' ॥
इति च भारते ।

'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' इत्यत्रापि जीवशब्दः परे । न हि संसारिणः मुख्यतः प्राणधारकत्वं युज्यते ।

'ब्रह्मणा त्यक्तदेहस्तु मृत इत्युच्यते नरः' । इति च ।

'यं वै सोम्य एतमणिमानं न निभालयसे अस्य सोम्यैषोऽणिम्न एवं महान् न्यग्रोधस्तिष्ठति' इत्यत्रापि अणिमशब्देन पर एवाभिहितः ।

'स एषोऽणिमा ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा अतत् त्वमसि श्वेतकेतो' इत्युक्तत्वाच्च ।

धानासु तु अण्व्य इवेमाः धाना इति स्त्रीलिङ्गप्रयोगात् इवशब्दप्रयोगाच्च नाणिमत्वम् । न च ता न निभालयसे ।

ऐतदात्म्यमित्येतदीयम् । स आत्मेत्यात्मशब्दस्तु पर एव । 'द्युभ्वाद्यायतनं स्वशब्दात्', 'नानुमानमतच्छब्दात्', 'प्राणभृच्च' इत्यत्र तमेवैकं जानथ आत्मानमिति स्वशब्दपर्यायात्मशब्दात् न प्रकृतिजीवावभिधीयेते किन्तु पर एवेति भगवता व्यासेन अभिहितम् । अतः आत्मशब्दः तस्मिन्नेव मुख्यः ।

'आततत्वाच्च मातृत्वादात्मेति परमो हरिः ।
आत्माभासः तदन्ये ये न ह्येतेषां ततः गुणाः' ॥
इति परमोपनिषदि ।

'तेजः परस्यां देवतायां तावन्न जानाति' इत्यत्र च 'यदा अस्य प्राणादीन् परः ग्रसति तदा न जानाति यदा ददाति तदा जानाति' इति तद्वशत्वमेवोक्तम् ।

'यदा प्राणान् ददातीशः तदा चेतनकोऽखिलम् ।
जानाति ग्रस्तकरणः तेन वेत्ति न किञ्चन' ॥ इति च ।

'अपहार्षीत् स्तेयमकार्षीत्' इत्यत्र च अन्याभिमतस्यैव वस्तुनः अपहार्यत्वात् भेद एवायं दृष्टान्तः । अन्यं सन्तं परमात्मानं स्वयमिति मन्यमानः स्तेन एवेति । न हि स्वकीयं परित्यजन् स्तेनो भवति ।

'ऐकात्म्यं नाम तदिदं केचिद् ब्रूयुरनैपुणाः ।
शास्त्रतत्त्वमविज्ञाय तथा वादबलाज्जनाः ॥

कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ।
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ॥

ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः ।
वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ॥

तेषां तमश्शरीराणां तम एव परायणम् ।
यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ॥

कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः' ॥ इति मोक्षधर्मे ।

'यथा पक्षी च सूत्रं च नानावृक्षरसा यथा ।
यथा नद्यः समुद्रश्च शुद्धोदलवणे यथा ।
यथा चोरापहार्यौ च यथा पुंविषयावपि ।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ।
तथापि सूक्ष्मरूपत्वान्न जीवात्परमो हरिः ॥
भेदेन मन्ददृष्टीनां दृश्यते प्रेरकोऽपि सन् ।
वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बद्ध्यतेऽन्यथा' ॥

इति च परमोपनिषदि ।

'प्रेरकः सर्वजीवानां प्राणधीचोदिता च सः ।
विष्णुः संसारिणोऽन्यो यस्तमविज्ञाय मूढधीः ॥
देहेन्द्रियप्राणबुद्धिनेतृत्वं मन्यतेऽऽत्मनः ।
अतः संसारपदवीं याति जीवेशयोः सदा ।
वैलक्षण्यं परं ज्ञात्वा मुच्यते बद्ध्यतेऽन्यथा' ॥ इति च

सर्वान् वेदानधीत्य महामनाः अनूचानमानी स्तब्ध एयाये-त्यात्मनोऽयं अनूचानत्वादिगुणप्रदं परमविज्ञाय स्तब्धस्य पराधीनत्वज्ञापनेन स्तब्धतां निरस्य तन्निष्ठा हि अत्रोपदिश्यते । तद्धैक आहुरसदेवेदमग्र आसीदित्यादि वादिप्रसिद्धमपि निराक्रियते ।

'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः' ॥

इत्यदिवत् श्रुतितात्पर्यापरिज्ञानप्राप्तं च ।

दर्शितं च ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः । इति ।

तद्वशत्वज्ञापनार्थं च सदेव सोम्येदमग्र आसीदित्यादिसृष्टि-कथनम् ।

एकविज्ञानेन सर्वविज्ञानं च प्राधान्यात् किञ्चित् सादृश्यात् कारणत्वाच्च । न तु तदन्यस्य मिथ्यात्वात् ।

न हि सत्यज्ञानेन मिथ्याज्ञानं भवति । न हि शुक्तिज्ञः रजतज्ञः इत्युच्यते । विरोधात् तयोः ज्ञानयोः नेदं रजतमिति अरजतज्ञो हि शुक्तिज्ञः भवति । रजतज्ञश्चेन्न शुक्तिज्ञः । न हि तज्ज्ञः तदभावज्ञः भवति । तदभावस्य तज्ज्ञानपूर्वकत्वं च अन्यत्र तस्य सत्त्वादेव दृष्टम् । तदनङ्गीकारे तदेव न युज्यते । प्रधानज्ञानादप्रधानस्य ज्ञातवद्व्यपदेशः अस्त्येव । यथा प्रधानपुरुषाणां ज्ञानाह्वाननाशनैः ग्रामः ज्ञातः आहूतो नाशित इति व्यपदेशः । कारणे च पितरि ज्ञाते पुत्रो ज्ञात इति जानाम्येनमस्य पुत्रोऽयमिति व्यपदेश इति । एवमत्राप्येतत् सृष्टं सर्वमित्यादि ।

सादृश्याच्चेकस्त्रीज्ञानादन्यस्त्रीज्ञानमिति । तदेव सादृश्यमत्रापि विवक्षितं यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादिना । अन्यथा एकशब्दः पिण्डशब्दश्च व्यर्थः स्यात् । मृदा विज्ञातया इत्येतावता पूर्णत्वात् । न हि एकमृत्पिण्डात्मकानि अन्यमृण्मयानि । सादृश्यमेव हि तेषाम् ।

'यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् । यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' इत्यादिकमपि व्यर्थं स्यात् ।

न हि एकमण्यात्मकमन्यत् लोहमयम् । न चैकनखनिकृन्तनात्मकं सर्वं कार्ष्णायसम् ।

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्। इत्यत्र च वाचा नाम्नामारम्भणं विकारः अविकृतं नित्यं नामधेयं मृत्तिकेत्येव इत्येतद्वचनं सत्यमिति श्रुत्यर्थः।

न च वाचारम्भणशब्दोऽपि मिथ्यात्वे प्रसिद्धः। वाचारभणमात्रमिति च अश्रुतकल्पनम्। तस्मिन् पक्षे नामधेयशब्दः इति शब्दश्च व्यर्थः स्यात्। अतः न कुत्रापि जगतः मिथ्यात्वमुच्यते।

'कविर्मनीषी परिभूः स्वयम्भूः। याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः'।

'यच्चिकेत सत्यमित्तन्न मोघं वसुस्पार्हमुत जेतोत दाता'।

'विश्वं सत्यं मघवाना युवोरिदापश्च न प्रमिनन्ति व्रतं वाम्'।

'प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्'।

'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्ति।
नचान्यथा क्वापि च कस्य चेदमभूत् पुरा नापि तथाऽभविष्यत्'।

'असत्यमाहुः जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परां हि'।

'यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत् सत्यकर्मा महात्मा'।

'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम्।
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः'॥ इत्यादेश्च।

'अनित्यत्वविकारित्वपारतन्त्र्यादिरूपतः ।
स्वप्नादिसाम्यं जगतः न तु बोधनिवर्त्यता ॥
सर्वज्ञस्य यतो विष्णोः सर्वदैतत् प्रतीयते ।
बोधासहं ततो नैतत् किन्त्वाज्ञावशमस्य हि' ॥

इति परमोपनिषदि ।

'प्रज्ञाविनिर्मितं यस्मादतो मायामयं जगत् ।
अनेनानुगतं यस्मादनृतं तेन कथ्यते ॥

बोधानिवर्त्यमपि तु नित्यमेव प्रवाहतः ।
अ इत्युक्तः परो देवः तेन सत्यमिदं जगत् ॥

तदधीनस्वरूपत्वादसत्यं तेन कथ्यते ।
सत्यस्य सत्यः स विभुः इन्द्रचापस्य सूर्यवत्' । इति ॥

'तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेप सत्यम् ।' इति च ।

'महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यते ॥

प्रकृतिः प्रकृष्टकरणाद् वासना वासयेद् यतः ।
अ इत्युक्तः हरिस्तस्य विद्याऽविद्येति संज्ञिता ॥

मायेत्युक्त्वा प्रकृष्टत्वात् प्रकृष्टं हि मयाभिधम् ।
विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते ।
प्रज्ञप्तिरूपो हि हरिः सा च स्वानन्दलक्षणा' ॥ इति च ।

'सर्वे वेदाः हरेर्भेदं सर्वस्मात् ज्ञापयन्ति हि ।
भेदः स्वातन्त्र्यसार्वज्ञ्यसर्वैश्वर्यादिकश्च सः ।
स्वरूपमेव भेदोऽयं व्यावृत्तिश्च स्वरूपता ।
सर्वव्यावृत्तये यस्मात् स्वशब्दोऽयं प्रयुज्यते ।
सर्वव्यावृत्ततामेव नेति नेत्यादिका श्रुतिः ।
विष्णोरतो वदेदन्या अपि सर्वा न संशयः' ॥

इति नारायणश्रुतिः ।

'अहं ब्रह्मास्मि' 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्'

'योऽसावादित्ये पुरुषः सोऽहमस्मि स एवाहमस्मि' इत्यादि तु अन्तर्याम्यपेक्षया ।

'स यश्चायं पुरुषे यश्चासावादित्ये स एकः'

'अ इति ब्रह्म तत्रागतमहमिति तस्योपनिषदहमिति'

'अहंनामा हरिर्नित्यं अहेयत्वात् प्रकीर्तितः ।
त्वं चासौ प्रतियोगित्वात् परोक्षत्वात् सः' इत्यपि ।

'सर्वान्तर्यामिणि हरौ अस्मच्छब्दविभक्तयः ।
युष्मच्छब्दगताश्चैव सर्वास्तच्छब्दगा अपि ।
सर्वशब्दगताश्चैव वचनान्यखिलान्यपि ।
स्वतन्त्रत्वात् प्रवर्तन्ते व्यावृत्तेऽप्यखिलात् सदा ।
तत्सम्बन्धात्तु जीवेषु तत्सम्बन्धादचित्स्वपि ।
वर्तन्त उपचारेण तिङ्पदान्यखिलान्यपि ।
तस्मात् सर्वगतो विष्णुरेको भिन्न ततो बहुः' ।

इति नारायणश्रुतिः ।

'सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्' ॥

इति भगवद्वचनम् ।

न चासत्यो भेदः ।

'सत्यमेनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः ।
सत्यः सोऽस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये' ।

'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं
भिदा। मैवारुवण्यो मैवारुवण्यो मैवारुवण्यः' ।

'आत्मा हि परमस्वतन्त्रः सर्ववित् सर्वशक्तिः परमसुखः परमः जीवस्तु तद्वशः अल्पज्ञः अल्पशक्तिः आर्तः अल्पकः'। इत्यादि-श्रुतिभ्यः ।

न च अवान्तरसत्यत्वमिदम् ।

'यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' ।

'एतमानन्दमयमात्मानमुपसङ्क्रम्य इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत् साम गायन्नास्ते' ।

'ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्याम्
यज्ञस्य मात्रां विमिमीत उत्वः' ॥

परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ।

स तत्र पर्येति जक्षन् क्रीडन् रममाणः
स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा ।

'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं जिघ्रेत् तत् केन कं विजानीयात् येनेदं सर्वं विजानाति तं च केन विजानीयात् विज्ञातारमरे केन विजानीयात्'

'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति'

'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'

'अमृतस्यैष सेतुः'

'अक्षण्वतः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षा स उत्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे' ॥

'ईशमाश्रित्य तिष्ठन्ति मुक्ताः संसारसागरात् ।
यथेष्टभोगभोक्तारः ब्रह्मान्ता उत्तरोत्तरम्' ॥

इति मोक्षानन्तरं भेदश्रुतिभ्यः ।

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' ॥ इति भगवद्वचनम् ।

ॐ जगद्व्यापारवर्ज्यम् ॐ । ॐ प्रकरणादसन्निहितत्वाच्च ॐ । इत्यादि च ।

'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इति तद्धर्माणामप्यनुच्छित्तेः प्रस्तुतत्वात् । अत्रैव मा भगवान् मोहान्तमापिपत् न प्रेत्य संज्ञास्तीति संज्ञानाशस्य दोषत्वेनोक्तत्वात् ।

'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इति ह्याक्षेप एव । न हि भोगाभावो विज्ञातारमरे केन विजानीयादिति विज्ञातुरविज्ञानं चापेक्षितम् ।

'अहमित्येव यो वेद्यः स जीव इति कीर्तितः ।
स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः' ॥
इति परमश्रुतिः ।

'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्' । इति मोक्षधर्मे ।

न तु तद् द्वितीयमस्तीति च । यत्तद् ब्रह्म द्वैतत्वेन न पश्यति तदेव द्वितीयं नेत्याह । यत्ततोऽन्यद् विभक्तत्वेनैव पश्येदिति वाक्यशेषात् ।

न हि द्रष्टुः दृष्टेः विपरिलोपो विद्यते इति हेतोश्च ।

'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' इत्यत्रापि एकीभावो मत्यैक्यं क्षीराब्ध्यादिस्थिततद्रूपापेक्षया स्थानैक्यं वा ।

'कामेन मे काम आगाद् हृदयाद् हृदयं मृत्योः ।
यदमीषामदः प्रियं तदैतूपमामभि' ।

'ब्रह्ममत्यनुकूला मे मतिर्मुक्तौ भविष्यति ।
अतः प्रायोऽनुकूलत्वमिदानीमपि मे स्थितम्' ॥

'येनाक्रमन्ति ऋषयो हि आप्तकामा यत्र तत्सत्यस्य परमं निधानम्'

'एतमानन्दमयमात्मानमुपसङ्क्रामति' इत्यादिश्रुतिभ्यः ।

स्वरूपैक्याभिप्राये 'कर्माणि विज्ञानमयश्च' इति न युज्यते । न हि तत्पक्षेऽपि कर्मणां ब्रह्मैक्यं मुक्तावस्ति ।

निवृत्त्यभिप्राये च पञ्चदशकलानामपि समत्वात् 'गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदैवतासु' इति अन्यासां कलानां गमनमुक्त्वा कर्मणां विज्ञानात्मनश्चैकीभावकथनं व्यर्थं स्यात् विशेषाभावात् ।

'न च ज्ञाननिवृत्तस्य रजतस्य शुक्त्या एकीभावव्यवहारोऽस्ति ।

'परेऽव्यये' इति अधिकरणत्वकथनं च भेदज्ञापकम् । अन्यथा पर एव भवन्तीति निर्देशः स्यात् ।

'जीवस्य परमैक्यं तु बुद्धिसारूप्यमेव तु ।
एकस्थाननिवासो वा व्यक्तिस्थानमपेक्ष्य सः ॥

न स्वरूपैकता तस्य मुक्तस्यपि विरूपतः ।
स्वातन्त्र्यपूर्णतेऽल्पत्वपारतन्त्र्ये विरूपता' । इति परमश्रुतिः ।

'ब्रह्म वेद ब्रह्मैव भवतीत्यादि च' 'सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्' इतिवत् बृंहितो भवतीत्यर्थः । न हि ब्राह्मणपूजकः स एव ब्राह्मणो भवति ।

'ब्रह्माणि जीवाः सर्वेऽपि परब्रह्मणि मुक्तिगाः ।
प्रकृतिः परमं ब्रह्म परमं महदच्युतः ।
तस्मान्न मुक्ता न च सा न क्वचिद् विष्णुवैभवम् ।
प्राप्नुवन्ति स एवैकः स्वतन्त्रः पूर्णषड्गुणः' ॥ इति परमश्रुतिः ।

'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' ।

'ब्रह्मेशानादिभिर्देवैः यत्प्राप्तुं नैव शक्यते ।
तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे' ।। इति च ।

'यथाऽपियन्ति तेजांसि महातेजसि भास्करे ।
पृथक् पृथक् स्थितान्यद्धि स्वरूपैरपि सर्वशः ।
परे ब्रह्मणि जीवाख्यब्रह्माण्यपियन्ति हि ।।
मुक्तौ पृथक् स्थितान्येव तदन्येषामदर्शनम् ।
अप्ययोऽयं समुद्दिष्टो न स्वरूपैकता क्वचित्' ।।

इति नारायणश्रुतिः ।

अतः सर्वागमविरुद्धमेव जीवेश्वरैक्यम् ।

तथैव सर्वयुक्तिविरुद्धं च ।

न तावदेकजीववादो युज्यते । एकाज्ञानपरिकल्पितत्वे च सर्वस्य सर्वमिदं परिकल्पितमिति जानतः पुनः शिष्यादिबोधनं न युज्यते ।

न हि स्वप्नोऽयमिति निश्चित्य स्वाप्नपुत्रदायार्थं यतते । स्वप्ने तु स्वाप्नत्वाज्ञानादेव यतते ।

न च बहूनां दृश्यमानत्वादस्याज्ञानपरिकल्पितमिदमिति निश्चयो युज्यते । स्वप्ने तु प्रबोधानन्तरमेकस्यावशिष्टत्वात् निश्चयः । न चात्र तथास्ति ।

तस्य तस्य तथा तथा प्रतिपत्तव्यमित्यङ्गीकारे वस्तुनि विकल्पासम्भवादकल्पितमित्येव स्यात् । न च तथा प्रतिपत्तव्यमित्यत्र प्रमाणमस्ति ।

शिष्याज्ञानपरिकल्पितमित्यङ्गीकारे तस्यैवाचार्यभावे स्वयमेव कल्पितो भवतीति सम्यग्ग्रन्थाधिगमस्यैव अनर्थहेतुत्वं स्यात् । न च कस्यचिन्मुक्तिः । ग्रन्थाधिगमे तस्यैव शिष्याज्ञानपरिकल्पितत्व प्राप्तेः । स चैको जीवो यदि भेदवादी भवति तस्य दार्ढ्यात् न कदाचित् भेदनिवृत्तिरिति न कस्यापि मुक्तिः स्यात् । तेन यथा कल्पितं तथैव भवतीति तेन एकजीववादिनां नित्यनिरयकल्पने स एव स्यात् ।

न च एकजीवाज्ञानपरिकल्पितं समस्तमित्यत्र किञ्चिन्मानमस्ति ।

'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' ॥

इत्यस्य च अयमर्थः – प्रपञ्चः यदि विद्येत भवेत उत्पद्येत तर्हि निवर्तेत न च निवर्तते तस्मादनादिरेवायम् ।

प्रकृष्टः पञ्चविधो भेदः प्रपञ्चः । न च अविद्यमानोऽयं मायामात्रत्वात् । मायेति भगवत्प्रज्ञा सैव मानत्राणकर्त्री यस्य तन्मायामात्रम् । परमेश्वरेण ज्ञातत्वात् रक्षितत्वाच्च न द्वैतं भ्रान्तिकल्पितमित्यर्थः । न हि ईश्वरस्य भ्रान्तिः ।

तर्हि अद्वैतः सर्वभावानामिति व्यपदेशः कथमित्यतः आह अद्वैतं परमार्थतः इति । परमार्थापेक्षया हि अद्वैतं सर्वस्मादुत्तमः अर्थः स एक एवेत्यर्थः । अन्यथा अद्वैतः सर्वभावनामिति व्यर्थं स्यात् । सर्वभावानां मध्ये तस्य एकस्यैव अद्वैतत्वमियुक्ते समाधिकराहित्यमेव उक्तं स्यात् । अन्येपां सर्वभावानां च समाधिकभावः ।

विकल्पो विनिवर्तेत कल्पितो यदि केनचिदिति वाक्यशेषाच्च न कल्पितत्वमस्येति ज्ञायते । निवर्तते इत्यङ्गीकारे निवर्तेत विद्येतेति च प्रसङ्गरूपेण कथनं यदिशब्दौ च न युज्यन्ते ।

विद्येतेत्यस्य च उत्पत्त्यर्थानङ्गीकारे यद्यदस्ति तत्तन्निवर्तते इति व्याप्त्यभावात् निवर्तेत इति न युज्यते ।

अतः प्रपञ्चस्य अनादिनित्यत्वपरमिदं वाक्यम् ।

अतः उपदेशादयं वादोऽज्ञाते द्वैतं न विद्यत इत्याह । अज्ञात एव द्वैतं न विद्यते । अज्ञानिनां पक्ष एव द्वैतं न विद्यते इत्यर्थः ।

'जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ॥

मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात् ।
न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः ॥

कल्पितश्चेन्निवर्तेत न चासौ विनिवर्तते ।
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ॥

मतं हि ज्ञानिनामेतन्मितं त्रातं च विष्णुना ।
तस्मात् सत्यमिति प्रोक्तं परमो हरिरेव तु' ॥ इति परमश्रुतिः ।

मैत्रेयीशाखायां च– 'अथ ज्ञानोपसर्गाः' इत्युक्त्वा अथ ये चान्ये मिथ्यातर्कैः दृष्टान्तैः कुहकेन्द्रजालैः वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत् प्राकाश्या ह्यते तस्कराः अस्वर्ग्या इत्याह ।

'नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ।
भ्राम्यन् लोको न जानाति वेदविद्यान्तरं तु यत्' ॥ इति ।

आत्मसम्बन्धि किमपि नास्तीति वादो नैरात्म्यवादः ।

भ्रान्तिकल्पितत्वे च जगतः सत्यं जगद्वयमपेक्षितम् । न हि सत्यशुक्तेः सत्यरजतस्य तयोः सादृश्यस्य चाभावे भ्रन्तिरस्ति ।

स्वप्नेऽपि वासनारूपं सत्यमेव जगन्मनसि स्थितं वहिष्ठत्वेन दृश्यते । देहात्मनोरपि एकदेशस्थत्वादिसादृश्यमस्त्येव ।

शङ्खः पीतः नभो नीलमित्यादिष्वपि पीतादयोऽन्यत्र विद्यन्त एव । तत्सादृश्यं च द्रव्यत्वादिकं किञ्चित् शङ्खादीनां चास्त्येव । अतो न कुत्रापि सदृशवस्तुद्वयं विना भ्रमः ।

न चात्मन्यनात्मभ्रमः क्वचिद् दृष्टः । न हि कश्चिद् अहं अहं न भवामीति भ्रान्तो दृश्यते । आत्मन्यनात्मभ्रम एवायं प्रपञ्च इति तैरुच्यते । तं विनैव अनात्मनि आत्मभ्रमकल्पने अनात्मनः सत्यत्वं स्यात् । तदा चाद्वितीयत्वकल्पनेऽनात्मैवास्ति नात्मेति भवति ।

आत्माज्ञानात्मकत्वे च जगतः आत्मनो भिन्नत्वेन न दृश्येत । न हि शुक्तेः भेदेन रजतं दृश्यते भ्रान्तौ । न चैकमेव युगपद्वहुधा दृश्यते भ्रान्तौ । न चात्मनि भेदभ्रमः क्वापि दृष्टः ।

न च कुत्रापि मिथ्योपाधिकृतो भेदः दृष्टः । न च ज्ञानाज्ञानयोरपि मिथ्याकल्पितत्वं दृष्टम् । तद्विपयस्यैवान्यथात्वं भ्रान्तौ । एव-माद्यनन्तयुक्तिविरुद्धोऽयं पक्षः । ग्रन्थवहुत्वं स्यादित्येवोपरम्यते ।

न च सत्यत्वाङ्गीकारे कश्चिद्दोषः । बहुजीववादिपक्षेऽपि भेदस्य मिथ्यात्वाङ्गीकारे एते दोषाः भवन्त्येव । मिथ्योपाधिकृतं हि तेषामपि बहुत्वम् । न च मिथ्योपाधिकृतो भेदः क्वापि दृष्टः । आत्मनि अनात्मकल्पनारूपत्वात् मिथ्योपाधिरेव न युज्यते ।

मायामयीसृष्टिरपि तत्सदृशस्यान्यस्य विद्यमानत्व एव दृष्टा । द्रव्यत्वादिसादृश्ययुतं किञ्चिदधिष्ठानमाश्रित्यैव च ।

'अधिष्ठानं च सदृशं तथ्यवस्तुद्वयं विना ।
न भ्रान्तिर्भवति क्वापि स्वप्नमायादिकेष्वपि ॥
मानस्यां वासनायां तु बहिर्वस्तुत्वकल्पनम् ।
स्वाप्नो भ्रमश्च मायायां कर्तृदेहादिवस्तुषु ॥
चतुरङ्गबलत्वादिकल्पनं भ्रम इष्यते ।
न भ्रान्तिकल्पितं विश्वमतो विष्णुबलाश्रितम्' ॥

इति ब्रह्मवैवर्ते ।

'न च मायाविना माया दृश्यते विश्वमीश्वरः ।
सदा पश्यति तेनेदं न मायेत्यवधार्यताम्' ॥ इति च ।
'अपरोक्षदृशो मिथ्यादर्शनं न क्वचिद् भवेत् ।
सर्वापरोक्षविद्विष्णुः विश्वदृक् तन्न तन्मृषा' ॥ इति च ।

यदि चैकमेव ब्रह्मोपाधिभेदात् संसरति मुच्यते च तदा संसारिणां सर्वदा विद्यमानत्वात् सर्वदा संसार्येव ब्रह्म । अतस्तद्भावोऽपि न मुक्तिः । सर्वदोपाधिसम्बन्धत्वात् तस्य । न च शुद्धस्य नोपाधिसम्बन्ध इति वाच्यम् । उपाधिसम्बन्धस्योपाधिसम्बन्धकल्पनेऽनवस्थाप्रसङ्गात् । न च तेनैव सम्बन्धेन सम्बद्धस्य । आत्माश्रयप्रसङ्गात् ।

इतश्च मिथ्योपाधिर्न युज्यते । अज्ञानसिद्धौ मिथ्योपाधिसिद्धिः । अज्ञानं विना मिथ्यात्वासिद्धेः । न च मिथ्योपाधिं विना अज्ञानसिद्धिः मिथ्योपाधिभिन्नस्यैव अज्ञत्वात् ।

शुद्धस्यैवाज्ञत्वे मुक्तस्याप्यज्ञत्वप्रसक्तेः स्वाभाविकत्वात् सत्यत्वात् सद्वितीयत्वप्रसक्तेश्च । स्वाभाविकस्य च अनिवृत्त्यङ्गीकारात् अनिवृत्तिप्रसक्तेश्च । सत्यस्य अनिवृत्तिरिति हि तत्पक्षः । अतश्चान्योन्याश्रयता ।

अज्ञानसिद्धौ मिथ्योपाधिसिद्धिः मिथ्योपाधिसिद्धौ जीवसिद्धिः जीवसिद्धौ तदाश्रयाज्ञानसिद्धिरिति चक्रकं वा ।

न च शुद्धमेव भ्रान्त्या अज्ञमिति युक्तम् । अज्ञानसिद्धौ भ्रमसिद्धिः तत्सिद्धौ अज्ञानसिद्धिरित्यन्योन्याश्रयत्वात् ।

'अनागता अतीताश्च यावन्तः सहिताः क्षणाः ।  
अतीतानागताश्चैव यावन्तः परमाणवः ।  
ततोऽप्यनन्तगुणिताः जीवानां राशयः पृथक्' ॥

इति वत्सश्रुतेः न संसारिणां परिसमाप्तिरस्मत्पक्षे ।

'परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणराशयः ।  
सूक्ष्मत्वादीशशक्त्यैव स्थूला अपि हि संस्थिताः ।  
सहस्रयोजनसभां प्रभावाद्विश्वकर्मणः ।  
अनन्ता राशयोऽनन्ताः प्रजानामधिसंस्थिताः' ॥ इति स्कान्दे ।

न च मिथ्यावस्तुनो दुर्घटत्वमेव भूपणम् । दृष्टस्य वस्तुनः मिथ्यात्वकल्पनस्य दृष्टिसकाशाद्बलवत्प्रमाणयुक्त्यपेक्षत्वात् । तदभावे सत्यत्वं दृष्ट्यैव सिद्ध्यति ।

न हि अन्नादिकं भोग्यं दृष्ट्वा भोक्तुं सत्यत्वे प्रमाणान्तरमपेक्षते। किन्तु नेदमन्नमिति केनचिदुक्ते कथमिदमन्नत्वेन दृश्यमानमन्नं न भवतीति प्रमाणान्तरमपेक्षते । न च प्रत्यक्षदृष्टस्य ततो वलवत् प्रत्यक्षमागमं विना अनुमानादिनैव वाधो दृष्टः । दूरस्थवृक्ष-ह्रस्वत्वादौ प्रत्यक्षापटुत्वस्यैव निश्चितत्वाद्युक्त्या तत्र दीर्घत्व-निश्चयः। प्रत्यक्षस्य हि दूरे मन्दग्राहित्वं परिमाणादौ अन्यथात्वं च ततो वलवत्प्रत्यक्षेणैव निश्चितम्।

न च जगत्प्रत्यक्षस्य मिथ्यात्वं केनापि प्रमाणेन निश्चितम्।

विशेपतश्च ज्ञानाज्ञानसुखदुःखात्मभेदादिविपयस्यानुभवस्य न मिथ्यात्वं दृष्टम्।

अतश्च संसारस्य सत्यत्वात् सत्यस्य चानिवृत्त्यङ्गीकारात् न मोक्षः स्यात्।

अनुभवसिद्धस्य वलवदनुभवं विना युक्तित एव मिथ्यात्वाङ्गी-कारे आत्मनोऽपि मिथ्यात्वं स्यात् । युक्तिश्च सर्वस्यान्यस्य मिथ्यात्वाङ्गीकारात्' द्विधा कल्पने कल्पनागौरवमिति।

आत्माधिष्ठानभ्रमस्यैवादृष्टेः तस्य अधिष्ठानत्वमपि न युज्यते । दुर्घटत्वस्य च भूपणत्वे दुर्घटमपि आत्ममिथ्यात्वं स्यादेव।

प्रतीतेरपि अविद्याकार्यत्वाङ्गीकारात् । तस्याश्च दुर्घटत्वस्य भूपणत्वात् सत्यस्य च युक्त्यपेक्षत्वात् घटादीनां द्रष्टृत्वं आत्मनश्च जडत्वं द्रष्टुः अभावेऽपि प्रतीतिः अधिष्ठानं विनैव भ्रमः इत्यादि विरुद्धं सर्वमपि स्यात्।

उपाधिभेदाङ्गीकारे हस्तपादाद्युपाधिभेदेऽपि तद्गतसुखदुःखादि-भोक्तुर्यथा भेदो न प्रतीयते एवमेव शरीरादिभेदेऽपि भोक्तुर्भेदो न दृश्येत । सर्वदेहगतसुखदुःखादिकमेकेनैव भुज्येत ।

यथा च एकाङ्गुल्याद्यपगमेऽपि न मुक्तिः । एवमेकोपाध्यप-गमेऽपि तस्यैवानन्तोपाधिसम्वद्धत्वान्न मुक्तिः स्यात् ।

'उद्यतायुधदोर्दण्डाः पतितस्वशिरोऽक्षिभिः ।
पश्यन्तः पातयन्ति स्म कवन्धा अप्यरीन् युधि' ।

इति भारतवचनान्न विश्लेपाद् विशेपः ।

किञ्चोपाधिरात्मन एकदेशं ग्रसति उत सर्वमात्मानम् । एकदेशाङ्गी-कारे सावयवत्वम् । सावयवस्य चानित्यत्वं तैरङ्गीकृतम् । सर्वग्रासे च नोपाधिः भेदकः स्यात् । उपाधिकृतांशकल्पने तदुपाधिकृतत्वे आत्माश्रयत्वम् । उपाध्यन्तरकल्पने अनवस्था ।

न च ईश्वरस्य सर्वगतत्वात् औपाधिकभेदो व्रह्मणा भवति । न हि देशतः कालतश्चापरिच्छिन्नयोः औपाधिकभेदो दृष्टः ।

सर्वोपाधिगतत्वाच्च एकस्यैवेश्वरस्य भेदस्य मिथ्यात्वाच्च हस्त-पादादिभेदेऽपि भोक्तुरेकत्ववत् सर्वसुखदुःखादिभोक्तृत्वमीश्वरस्यैव स्यात् ।

देशतः कालतश्च अपरिच्छिन्नयोः औपचारिकभेदाभावादेव दुःखिनोऽन्यत् शुद्धं व्रह्म न सिद्ध्यति । अतः स्वाभाविकः संसार इति अनिवृत्तिरेव स्यात् ।

किञ्च विशिष्टस्य शुद्धस्य वा संसारः । शुद्धस्य संसार इत्युक्ते

स्वव्याहतिः । विशिष्टस्येत्युक्ते विशिष्टोऽन्यः स एव वा । स एव चेदुक्तो दोषः । अन्यश्चेत् नित्योऽनित्यो वा । अनित्यश्चेत् नाश एव न मोक्षः । नित्यत्वे च भेदस्य सत्यत्वं मोक्षेऽपि तस्य भावात् ।

स्वरूपमात्रस्याभेदः उपाधिभिन्न एवेत्यङ्गीकारे स्वरूपमेव उपाधिसम्बद्धमिति न तस्य शुद्धत्वम् ।

अशुद्धस्वभावस्य न कदाचित् शुद्धत्वमिति तत्पक्षः । उपाधिमिथ्यात्वाङ्गीकारे च अन्योन्याश्रयत्वादिदोषा उक्ताः ।

न चानादिकर्मभेदात् भेदः । औपाधिकभेदसिद्धौ कर्मभेदसिद्धिः, तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयत्वात् ।

अतोऽनन्तदोषदुष्टत्वात् ग्रन्थवहुत्वं स्यदित्येवोपरम्यते । अतः सर्वप्रमाणविरुद्धत्वात् नाभेदे श्रुतितात्पर्यम् ।

सर्वशब्दावाच्यस्य लक्षणाऽपि न दृष्टेति न तस्य शास्त्रगम्यत्वम् । अतो अवाच्यत्वादज्ञेयत्वात् शून्यमेव तदिति प्राप्तम् ।

न च स्वेनापि ज्ञेयत्वं तैरुच्यते । कर्तृकर्मविरोध इति हि ते वदन्ति । न च स्वरूपमन्यद्वा ज्ञेयं ज्ञातारं च विना ज्ञानं दृष्टम् । अतो ज्ञातृज्ञेयाभावात् ज्ञानस्यापि शून्यतैव । अतः शून्यवादात् न कश्चिद् विशेषः । न च ज्ञातृज्ञेयरहितं ज्ञानं क्वापि दृष्टम् ।

अप्राप्तत्वाच्च ईश्वरभेदस्य नाभेदे श्रुतितात्पर्यं युज्यते ।

'सर्वोत्तमं सर्वदोषव्यपेतं गुणैरशेषैः पूर्णमन्यं समस्तात् ।
वैलक्षण्यात् ज्ञापयितुं प्रवृत्ताः सर्वे वेदाः मुख्यतो नैव चान्यत्' ॥

इति महोपनिषदि ।

अतः सदागमैरेव सर्वस्माद् भिन्नत्वेन सर्वस्माद् विशिष्टत्वेन च विज्ञेयो भगवान् नारायण इति सिद्धम् ।

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्विष्णुतत्त्वविनिर्णये प्रथमः परिच्छेदः समाप्तः ॥

★★★

## द्वितीयः परिच्छेदः

'ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात् क्षराः ।
लक्ष्मीरक्षरदेहत्वात् अक्षरा तत्परो हरिः ॥

स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः ।
निस्सीमत्वेन ते सर्वे तद्वशाः सर्वदैव च ॥

सर्गस्थितिक्षययतिप्रकाशावृतिवन्धनम् ।
सर्वक्षराणामेकः स कुर्यात् सात्त्विकमोक्षणम् ॥

सर्गस्थितियतिज्योतिर्नित्यानन्दप्रदोऽक्षरे ।
चेष्टाप्रदश्च सर्वेषामेक एव परो हरिः ॥
तस्य नान्योऽस्ति सर्गादिकर्ता निर्दोषकश्च सः' ॥

इति परमश्रुतिः ।

'ब्रह्मशेपसुपर्णेशशक्रसूर्यगुहादयः ।
सर्वे क्षरा अक्षरा तु श्रीरेका तत्परो हरिः' ॥ इति स्कान्दे ।

'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ।
अहं रुद्राय धनुरातनोमि ब्रह्मद्विपे शरवे हन्त वा उ ।

अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश ।
अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तस्समुद्रे' ।

'यमन्तः समुद्रे कवयो वयन्ति तदक्षरे परमे प्रजाः ।
यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्' ।

'यदोषधीभिः पुरुषान् पशूंश्च विवेश भूतानि चराचराणि' ।

'अतः परं नान्यदणीयसं हि परात् परं यन्महतो महान्तम्' ।

'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्' ।

'तदेवर्तं तदु सत्यमाहुः तदेव ब्रह्म परमं कवीनाम्' ।

'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।
विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्' ।

'चन्द्रमा मनसो जातः चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत' ।

'एको नारायण आसीत् न ब्रह्मा नेशानो नाग्नीषोमौ नेमे द्यावापृथिवी' ।

'एको नारायण आसीत् न ब्रह्मा न च शङ्करः ।
स मुनिर्भूत्वा समचिन्तयत् तत एते व्यजायन्त ।
विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्राः' ।

'वासुदेवो वा इदमग्र आसीत् न ब्रह्मा न च शङ्करः ।
नेन्द्रसूर्यौ न च गुहो न सोमो न विनायकः' ॥

इत्यादिश्रुतिभ्यश्च ।

'यस्मात् परं नापरमस्ति किञ्चित्' इत्यत्रापि अपरमस्तीत्येवार्थः । अन्यथा 'तेनेदं पूर्णं ततो यदुत्तरतरं तदरूपमनामयम्' इति वाक्यशेषविरोधात् । तेनेदमित्युक्तमेव तत इति परामृश्यते । अन्यथा यस्मात् परं नेत्युक्तिविरोधात् ।

'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' ।

'अस्यैव सर्वनामानि व्यतिरिक्तस्य सर्वतः ।
यः स्वतन्त्रः सदैवैकः स विष्णुः परमो मतः' ॥

इत्यादिश्रुतिभ्योऽन्यनामान्यस्यैवेति नान्येषां सर्वेश्वरत्वादिकमुच्यते ।

सर्ववेदेष्वप्यस्यादोषवचनात् आदौ अभावावचनाच्च तद्वचनाच्चान्येषां सर्वेषां वेदेषु सर्वेषु । तेषां सर्वनामत्वानुक्तेश्च ।

'उत्पत्तिर्वासुदेवस्य प्रादुर्भावो न चापरः ।
देहोत्पत्तिस्तदन्येषां ब्रह्मादीनां तदीरणात् ।
देहोऽनादिर्हरेर्नित्यो ब्रह्मादीनामनित्यकः ।
मुख्योत्पत्तिस्तदन्येषां प्रादुर्भावो हरेर्जनिः' ॥ इति परमश्रुतेश्च ।

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्विष्णुतत्त्वविनिर्णये द्वितीयः परिच्छेदः समाप्तः ॥ २ ॥



## तृतीयः परिच्छेदः

'वर्जितः सर्वदोषैर्यो गुणसर्वस्वमूर्तिमान् ।
स्वतन्त्रो यद्वशाः सर्वे स विष्णुः परमो मतः ॥

इति परमोपनिषदि ।

'नित्यपूर्णाखिलगुणो निर्दोषः सर्वदैव यः ।
यः स्वतन्त्रः परो विष्णुर्जन्ममृत्यादिवर्जितः' ॥

नारद उवाच–

निर्दोषश्चेत् कथं विष्णुर्मानुषेषूदपद्यत ।
चिन्ताश्रमव्रणाज्ञानदुःखयुग् दृश्यते कथम् ॥

एष मे संशयो ब्रह्मन् हृदि शल्य इवार्पितः ।
अनुद्धार्योऽपरैर्मर्त्यैः सूक्तिशक्त्या तमुद्धर ॥

ब्रह्मोवाच–

स्त्रीपुंमलाभियोगात्मा देहो विष्णोर्न जायते ।
किन्तु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुम् ॥

प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ।
तथाऽप्यसुरमोहाय परेषां च क्वचित् क्वचित् ॥

दुःखाज्ञानभ्रमा(श्रमा)दीन् स दर्शयेत् शुद्धसद्गुणः ।
क्व व्रणादि क्व चाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे ।
दौर्लभ्यायैव मोक्षस्य दर्शयन् परमो हरिः ॥

मिथ्यादर्शनदोषेण तेन मुक्तिं न यान्ति च ।

तमो यान्ति च तेनैव तस्माद् दोषविवर्जितम् ।
प्रादुर्भावगतं चैव जानीयाद् विष्णुमञ्जसा' ॥ इति ब्रह्माण्डे ।

'गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते ।
अतो मिथोऽपि भेदो न तेषां कश्चित् कदाचन ॥

स्वरूपेऽपि विशेषोऽस्ति स्वरूपत्ववदेव तु ।
भेदाभावेऽपि तेनैव व्यवहारश्च सर्वतः' ॥ इति परमोपनिषदि ।

'अभिन्नत्वमभेदश्च यथा भेदविवर्जितम् ।
व्यवहार्यं पृथक् च स्यादेवं सर्वे गुणा हरेः ॥

अभेदाभिन्नयोर्भेदो यदि वा भेदभिन्नयोः ।
अनवस्थितिरेव स्यान्न विशेषणतामतिः ॥

मूलसम्बन्धमज्ञात्वा तस्मादेकमनन्तधा ।
व्यवहार्यं विशेषेण दुस्तर्कवलतो हरेः ॥
विशेषोऽपि स्वरूपं स स्वनिर्वाहकताऽस्य च' । इति ब्रह्मतर्के ।

'एकमेवाद्वितीयं तत्' 'नेह नानास्ति किञ्चन' ।
'मृत्योः स मृत्युमाप्नोति य इह नानेव पशयति' ।

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक् पश्यन् तानेवानुविधावति' । इत्यादिश्रुतेश्च ।

'देशः सर्वत्र पुरुषः स्वतन्त्रः कालनित्यता ।
इत्यादिषु स्वसम्बन्धात् यथैव गुणरूपिणः ॥
गुणित्वं गुणभोक्तृत्वं स्याद् विष्णोस्तच्च स स्वयम्' ॥
इति ब्रह्मतर्के ।

'विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः ।
निर्दुःखानन्दभुङ्नित्यं तत्समीपे स मोदते ।
मुक्तानां चाश्रयो विष्णुरधिकोऽधिपतिस्तथा ।
तद्वशा एव ते सर्वे सर्वदैव स ईश्वरः' । इति परमश्रुतिः ।

'अमृतस्यैष सेतुः,' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्यादि च ।

'नृपाद्याः शतधृत्यन्ताः मुक्तिगा उत्तरोत्तरम् ।
गुणैः सर्वैः शतगुणा मोदन्त इति हि श्रुतिः' ॥ इति पाद्मे ।

अतो निश्शेषदोषवर्जितः पूर्णोऽनन्तगुणो नारायण इति सिद्धम् ।

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
वट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥

स्वतन्त्रायाखिलेशाय निर्दोषगुणरूपिणे ।
प्रेयसे मे सुपूर्णाय नमो नारायणाय ते ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्विष्णुतत्त्वविनिर्णये तृतीयः परिच्छेदः समाप्तः ॥ ३ ॥

॥ समाप्तश्चायं ग्रन्थः ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# कर्मनिर्णयः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

ॐ य इज्यते विधीशानशक्रपूर्वैस्सदा मखैः ।
रमाप्रणयिने तस्मै सर्वयज्ञभुजे नमः ॥

[महानाम्नीनामुपसर्गानुपसृजत्ययं वै लोकः प्रथमा महाम्न्यन्तरिक्ष-लोको द्वितीयाऽसौ लोकस्तृतीया सर्वेभ्यो वा एष लोकेभ्य-स्सन्निर्मितो यत्पोळशी तद्यन्महानाम्नीनामुपसर्गानुपसृजति सर्वेभ्य एवैनं तल्लोकेभ्यस्सन्निर्मिमीते सर्वेभ्यो लोकेभ्यस्सन्निर्मितेन षोळशिना राध्नोति य एवं वेद । (ऐतरेयब्राह्मणम् २/१६/४)]

महानाम्नीनामृचामुपसर्गा ये उपसर्जनभूतास्तानुपसृजति संयोजयति । महन्नाम यासु ऋक्षु विद्यते ता महानाम्न्यः । परस्य ब्रह्मणो यन्नामेन्द्रादिकं तन्महार्थत्वान्महत् । महद्धि तत्परं ब्रह्म । अशेषगुणपूर्तेः ।

तत्रैक आहुरगुणं ब्रह्मेति । न तद्युक्तम् । श्रुतियुक्तिविरोधात् । तथाहि श्रुतिः–

'सत्यं ज्ञानमनन्तं ब्रह्म' । 'विज्ञानमानन्दं ब्रह्म' । 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः' । 'तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते' । 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' । 'एतावानस्य महिमा अतो ज्यायांश्च पुरुषः' । 'यो नः पिता जनिता यो विधाता

धामानि वेद भुवनानि विश्वा' । 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' । 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' । 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' । 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' । 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' इत्यादिका ।

युक्तिश्च । बुद्धिपूर्वं सर्वकर्तृत्वात् सर्वज्ञत्वादयो गुणा युक्ताः । 'कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम्' इति च भागवते ।

नच 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इत्यादिविरोधः । सत्वादिगुणाभावोक्तेस्तत्र । अन्यथा 'एको देवः सर्वभूतेषु गूढः' इत्यादीनामपि गुणत्वात् स्वोक्तिविरोधः ।

न च निर्विशेषं नाम किञ्चिदस्ति । निर्विशेषत्वोक्तेरेव व्याहतत्वात् । निर्विशेषत्वेन विशिष्टं तन्न वेत्युक्ते, यद्यविशिष्टं तर्हि न विशेषनिराकरणम् । विशेषवत्त्वमेव भवति । यदि तेन विशिष्टं स एव विशेष इति व्याहतिः ।

न च निर्विशेषत्वे किञ्चिन्मानम् । अशेषविशेषवचनानुभवयुक्तिविरोधश्च ।

न च मिथ्याविशेषवत् । व्याहतेः । मिथ्याविशेष इत्युक्ते ह्यसद्विशेष इत्येव भवति । तथाच विशेषविशिष्टपक्षोक्तदोष एव ।

न चानिर्वचनीयविशेष इति भवति । अनिर्वचनीयासिद्धेः । न हि तत्र प्रत्यक्षमस्ति । मिथ्याशब्दस्त्वभाववाच्येव । तदन्यत्र

प्रमाणाभावात् । न चान्यत् प्रमाणम् । प्रतिज्ञाव्याहतेः । नहि सदन्तरादसतश्चान्यत् सदसद्विलक्षणं प्रसिद्धम् । असन्न भवतीत्युक्ते 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति सदेव भवति । असदन्तरं वा विशेषविवक्षायाम् ।

किञ्चैतद्वैलक्षण्यं भेदोऽभेदो भेदाभेदो वा? न तावद्भेदः । अनङ्गीकारात् । व्यावहारिकभेदश्चानिर्वाच्यसिद्धौ वक्तव्यः । न चाव्यावहारिकं किञ्चित् । न चाशेषव्यवहारनिवृत्तौ किञ्चिन्मानम् । न च मिथ्यातथ्ययोः सामान्यं व्यावहारिकत्वं धूमबाष्पयोर्धूमत्ववत् । न चाभेदोऽनङ्गीकारदेव । तथैवोभयम् । अभेदे चानिर्वाच्यब्रह्मणोस्तच्छब्दयोः पर्यायत्वम् ।

न च व्यावर्त्यविशेषेणापर्यायत्वं क्वचित् । व्यावर्त्यविशेषस्तद्व्यावृत्ते ब्रह्मणि विशेषमापादयति चेद्विशिष्टवाक्यार्थता । न चेन्न ब्रह्मज्ञानार्थिने पदान्तरं वाच्यम् । असङ्गतत्वात् । मिथ्याविशेषस्य चासिद्धिरुक्ता । अतोऽन्योन्याश्रयताऽनवस्थितिश्चक्रकं वा । भेदाभेदविलक्षणमप्युक्तरीत्यैवापाकृतम् ।

किञ्चासद्विलक्षणमित्यत्राभावान्यविरोधानां मध्ये नञः कोऽर्थः ? यद्यभावो न, असद्विलक्षणत्वं भावत्वमेव जगतः स्यात् । न च सतोऽन्यस्मादसतो विलक्षणं जगत् । असतोऽन्यत्वादिधर्मानङ्गीकारात् । ब्रह्मणश्च । असतोऽनिर्वचनीयत्वाङ्गीकाराच्च न वैलक्षण्यं ततोऽनिर्वाच्यस्य । तथापि चेद्वैलक्षण्यं नानिर्वाच्यत्वं जगतः । न च विरोधः । विरोधिनोरन्यतरनिषेधेऽन्यतरव्याप्तत्वानुभवात् । अविद्यमानं न भवतीत्युक्ते विद्यमानमित्येव हि सर्वलोकानुभवः । अतोऽनन्तगुणो भगवान्नारायण इति सिद्धम् ।

न च सिद्धेऽर्थे वाक्यस्य प्रामाण्याभावादीश्वराद्यसिद्धिः । सिद्धातिरिक्तकार्याभावात् । लिङाद्यर्थस्त्विष्टसाधनत्वमेव । न हि कर्तव्यत्वं नामेष्टसाधनत्वादन्यत्किञ्चिदस्ति । तन्मानाभावात् । शब्दस्तु न तद्वक्तीत्युक्तम् । लिङादेरिष्टसाधनार्थत्वेनैव कृतार्थत्वे तदन्यकार्यकल्पने कल्पनागौरवं च ।

न च तत्कल्पकं किञ्चित् । विप्रतिपत्तौ चान्यन्मानं वक्तव्यं तद्भावे । न चानुमा । अप्रसिद्धविशेषणत्वात् । न चार्थापत्तिः । अनुपपत्त्यभावात् ।

कार्याभावादेव कार्यान्वयिनि (कार्यान्वयान्वयिनि वा) व्युत्पत्तिरित्यादि दूरतो निरस्तम् । कार्यान्विते व्युत्पत्तिरिति वदतोऽकार्यान्विते व्युत्पत्तिरित्युक्ते किमुत्तरम् ? अध्याहार इत्युक्ते लोप इत्युत्तरम्। अशेषसिद्धपदार्थलोपाल्लिङाद्यर्थमात्रलोप एव गरीयान् । हससि हसामीत्यादिसिद्धार्थ एव बालानां व्युत्पत्तेः । प्रथमप्राप्तत्वान्न तत्त्यागे कारणम् । तथैव व्युत्पत्तिदर्शनाच्च । अतः सिद्धार्थे प्रामाण्यसिद्धेश्च सिद्धं महागुणवत्त्वं विष्णोः ।

ताश्च विदा मघवन् इत्याद्याः–

**ॐ वि॒दा म॑घवन् वि॒दा गा॒तुमनु॒शंसि॑षो॒ दिशः॑ ।**
**शिक्षा॑ शचीनां पते पूर्वी॒णां पु॑रूवसो ॥ १ ॥**

हे मघवन् धनवन् यशस्विन् मखपत इति वा–

'तं वा एतं मघ(ख)वन्तं सन्तं मघवानित्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' । 'तेभिरिन्द्रं चोदय दातवे

मघम्' । 'तत्र आयातु मघाय' । 'यशो वा मघम्' । 'मघमनु प्रापत्सि', 'आ मामेतु मघम्' । 'मघमनु प्रापत्सि । धनं वाव मघम्' इत्यादिश्रुतिभ्यः ।

गातुं त्वां स्तोतुम् । विद वेदयेति सामान्यतोऽपेक्षिताशेष-वेदनमुक्त्वा तात्कालिकापेक्षितार्थं प्रार्थयति गातुं विदेति । त्वमेव अनुशंसिपो दिशः मार्गान् । आत्मनः स्तुतिप्रकारान् त्वमेवोप-दिशेत्यर्थः । पूर्वीणां भगवत्सम्प्रदायागतानां परमविद्यानामर्थे शिक्ष, शचीनां विद्यानां पते, वाचां पत इति वा । पुरूवसो बहुवित्त बहुज्ञानेति वा । बहुषु वसति बहूनामावास इति वा ।

**आभिष्ट्वमभिष्टिभिः प्रचेतन प्रचेतय ।**
**इन्द्रं द्युम्नाय न इष एवा हि शक्रः ॥ २ ॥**

आभिः अभिष्टिभिः एवम्भूतैस्त्वत्पर्येषणैस्त्वत्प्रार्थनैः कश्चि-न्मदादिकं प्रचेतय प्रबोधय । प्रकृष्टचेतन सर्वज्ञ परमात्मन् । द्युम्नाय ज्ञानाय, वित्ताय, यशसे वा । इषे अन्नाय च नः प्रबोधय । एतादृशो हि शक्रः । शक्र एवेति वा । शक्तिरतिरूपत्वात् शक्रः ॥ २ ॥

**राये वाजाय वज्रिवश्शविष्ठ वज्रिन्नृञ्जसे ।**
**मंहिष्ठ वज्रिन्नृञ्जस आ याहि पिब मत्स्व ॥ ३ ॥**

राये वित्ताय । वाजाय अन्नाय । वज्रिणम् इन्द्रं वर्तयतीति वज्रिवः । नियामकत्वेन गच्छतीति वा । शविष्ठ बलवत्तम सुखवत्तमेति वा । ऋञ्जसे प्रेरयसि सर्वान् । 'मंहिष्ठ वज्रिन्नृञ्जस' इत्यभ्यासस्तात्पर्यार्थः । मत्स्व मदं कुरु ॥ ३ ॥

**विदा रायस्सुवीर्यं भुवो वाजानां पतिर्वशाँ अनु ।**
**मंहिष्ठ वज्रिन्नृञ्जसे यश्शविष्ठश्शूराणाम् ॥ ४ ॥**

विदा वेदय लम्भय रायस्सुवीर्यं च । वाजानां प्रजानां पतिः भुवः अभवः । 'प्रजा वै वाजः' इति श्रुतेः । वशाँ अनु यथा-वशम् । 'वश इच्छायाम्' इति धातोः । यथावशं यथेच्छम् । शूराणां सकाशाद्बलवत्तमः ॥ ४ ॥

**यो मंहिष्ठो मघोनां चिकित्वो अभि नो नय ।**
**इन्द्रो विदे तमु स्तुषे वशी हि शक्रः ॥ ५ ॥**

मघोनां यशस्विनां महत्तमः । चिकित्वः ज्ञातः कर्तरिति वा, नः अभितः सर्वतो नय । इन्द्रो विदे समस्तं व्यजानात् । तमेव स्तुषे ॥ ५ ॥

**तमूतये हवामहे जेतारमपराजितम् ।**
**स नः पर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत् ॥ ६ ॥**

ऊतये रक्षायै, अभिप्रायसिद्धये वा । स नो द्विषः शत्रूनति-पारयतु, पापानि तमांसि वा । क्रतुर्ज्ञानरूपः । छन्दः इच्छारूपः । छन्यत्वाच्छादनत्वाद्वा । ऋतम् अशेषशास्त्रावगतम् ॥ ६ ॥

**इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम् ।**
**स नः पर्षदति द्विषः स नः पर्षदति स्त्रिधः ॥ ७ ॥**

सातये लब्धये । स्त्रिधो विनाशान् ॥ ७ ॥

**पूर्वस्य यत्ते अद्रिवः सुम्न आधेहि नो वसो ।**
**पूर्तिश्शविष्ठ शस्यत ईशे हि शक्रः ॥ ८ ॥**

पूर्वस्य अनादेः सतस्ते सकाशात् यत्सुम्नं सुखं तस्मिन् नः आधेहि । तव पूर्तिः शस्यते ॥ ८ ॥

**नूनं तन्नव्यं सन्यसे प्रभो जनस्य वृत्रहन् ।**
**समन्येषु ब्रवावहै शूरो यो गोषु गच्छति**
**सखा सुशेवो अद्वयाः ॥ ९ ॥**

तन्नव्यं स्तुत्यं ब्रह्म । तत्सम्यक् हृदि न्यसे जनस्योपदेशेन । त्वत्स्वरूपेषु त्वं चाहं च संव्रवावहै । गोषु ज्ञानेषु गच्छति ज्ञानविषयो भवति । सुशेवः सुसुखः । समाधिकवर्जितोऽद्वयः ॥ ९ ॥

**एवाह्येवैवाह्यग्राँ३इ । एवाह्येवैवाहीन्द्रँ । एवाह्येवैवाहि-विष्णाँ३ उ । एवाह्येवैवाहि पूषन् । एवाह्येवैवाहि देवाः । एवा हि शक्रो वशी हि शक्रो वशाँ अनु ॥ १० ॥**

'एवाह्येवैवाहि' इत्यग्न्यादिदेवतानां संवादरूपेणोक्तमर्थमतिशये-नावधारयति । अभ्यासो हि तात्पर्यार्थः । एवं हि एवमेवहीत्यर्थः । 'विनिश्चिते तु संवादे विभागो रङ्ग एव च' इति शब्दनिर्णये । अतो 'अग्राई' इत्यादि । एवमेव हि शक्रः । वशानन् यथावशं स्वतन्त्रो वर्तत इत्यर्थः ॥ १० ॥

**आयोमन्याय मन्यव उपोमन्याय मन्यवे ।**
**उपेहिं विश्वध ॥ विदा मघवन् विदोम् ॥ ११ ॥**

'अय पय गतौ' इति धातोः आयो इत्यायतिः । उपो इति-वदतिशयार्थे ओकारः । 'ओ अतिशये' इति च सूत्रम् । आयो-

जानातीत्यायोमन्यः, समीपस्थमपि जानातीत्युपोमन्यः । अन्येषामिन्द्रियाणां पराङ्मुखत्वान्न ह्यान्तरं जानन्तीति । अयन्त्वान्तरमप्यापरोक्ष्येण पश्यति । अयनेन गमनेन प्राप्यं दूरस्थम् आयो इति वा । 'मनु अवबोधने' इति धातोर्मन्युरिति ज्ञानी, बाह्यज्ञाय ज्ञानिने आन्तरज्ञाय ज्ञानिने इत्यभ्यासो हि तात्पर्यार्थः । एवंविधं मद्गतं त्वामुद्दिश्यैवोपेहि । विश्वध विश्वधारक । समीपतो दूरतश्च त्वां मन्यमानाय मह्यं मन्यवे ज्ञानाय मामुपेहीति वा–

'समीपे दूरतोऽभिज्ञं त्वामुद्दिश्यैव मद्गतम् ।
एहि विष्णो न मे शक्तिस्त्वदाह्वाने हि मामुप ।
इति ब्रह्माऽस्तुवद्विष्णुं तन्नाभ्युत्थितपद्मगः' ॥ इति पाद्मे ।

'समीपे दूरतश्चैव ध्यायन्तं त्वा सदा प्रभो ।
मामेहि ज्ञानदानायेत्याह गाधिसुतो हरिम्' ॥ इति स्कान्दे ।

'ओतमस्मिन् जगद्यस्मादोमित्युक्तो हरिस्सदा ।
तमेव जगदाधारं यतयः समु(पर्यु)पासते' ॥
इति मान्यसंहितायाम् ॥ ११ ॥

'इन्द्रो वा एताभिर्महानात्मानन्निरमिमीत' इत्यस्याप्युक्त एवार्थः । निर्माणं नामाऽत्मनस्तद्व्याख्यानेन ख्या(स्था)पनम् । न ह्यन्यथा तासां करणत्वं भवति ।

'यस्तद्वेद स पितुष्पिताऽसत्' इति (च) श्रुतिः । 'त्रीणि पदा निहिता गुहासु यस्तद्वेद स पितुष्पिताऽसत्' 'स्त्रियस्सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न विचेतदन्धः । कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पिताऽसत्' इत्यादिश्रुतिभ्यो

विज्ञानमेव तन्निर्माणम् । 'इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः' इत्यादेर्विज्ञापनं वा ।

'प्रचेतन' 'प्रचेतय' । 'आयाहि पिब मत्स्व' । 'क्रतुश्छन्द ऋतं बृहत्' । 'सुम्न आधेहि नो वसो' इत्युपसर्गाः । अंशा अप्यंश्यपेक्षयोपसर्गा भवन्ति । उपसृष्टत्वादुपसर्गाः ।

'अन्तर्गतं वहिर्गं च द्विधा स्यादुपसर्जनम् ।
हस्तवद्धेतिवच्चैव पदानां चोपसर्गवद्' ॥ इति शब्दनिर्णये ।

'अधत्तान्यं जठरे प्रेमरिच्यत प्रचेतन' ॥ १ ॥

'दाता राधस्तुवते काम्यं वसु प्रचेतय' ॥ २ ॥

'अस्माकं वोधि चोदिताऽयाहि पिव मत्स्व' ॥ ३ ॥

'तं त्वा परिष्वजामहे क्रतुश्छन्द ऋतं वृहत्' ॥ ४ ॥

'या ते रातिर्ददिर्वसु सुम्न आधेहि नो वसो' ॥ ५ ॥

इत्युपसृजति ॥

अशेषमहानाम्न्यर्थसंस्मरणपरिज्ञानपूर्वकमुपसर्गसंयोजनं कर्तव्यमित्येदर्थत्वेन महानाम्नीप्रशंसा क्रियते । अन्यथा तावन्मात्रप्रशंसामृते अशेषमहानाम्नीप्रशंसाया व्यर्थत्वात् । तृचविभागेन 'विदा मघवन्' 'तमूतये' 'नूनम्' इति वा तिस्रो महानाम्न्यः ।

'प्रथमा या महानाम्नी तद्वाच्यः पार्थिवो हरिः ।
द्वितीयाया आन्तरिक्ष्यस्तृतीयाया द्युगः प्रभुः' ॥

इत्यृक्संहितायाम् ।

'तृचास्तिस्रो महानाम्न्यः पञ्चर्चा प्रथमा परा ।
तृचा द्व्यृचा च निगदैस्तार्तीया सप्तभिर्युता ।
इति त्रेधा विभागस्स्याज्जपध्यानादिकर्मसु' ॥ इति च ।

'त्रिलोकगेन हरिणा निर्मितष्षोळशीक्रतुः ।
एवं ज्ञात्वा हरिं तं च कर्म कुर्वन्न जायते' ॥ इति प्रवृत्ते ।

'एवाह्ये वैवाही'त्युपसर्गस्यार्थोऽप्युक्तावधारणरूपत्वात् पूर्वोक्तार्थज्ञानं विना न स्मर्तुं शक्यते । एवं निर्मितेन षोळशिना ऋद्धो (राध्नो) भवत्येवंवित् ।

[प्रप्र वस्त्रिष्टुभमिषमर्चत प्रार्चत यो व्यतीँरफाणयदिति प्रज्ञाता अनुष्टुभः शंसति । तद् यथेह चेह चापथेन चरित्वा पन्थानं पर्यवेयात् तादृक् तद् यत् प्रज्ञाता अनुष्टुभः शंसति ।]
(ऐत.ब्रा.पं.४. अ.१. खं.४, वाक्य २)

**प्रप्र॑ वस्त्रि॒ष्टुभ॒मिषं॑ म॒न्दद्वी॑राये॒न्द॑वे ।**
**धि॒या वो॑ मे॒धसा॑तये॒ पु॒रन्ध्या॒ वि॑वासति ॥ १ ॥**
(ऋ.मं.८, सू.६९/१)

प्रप्र वः । हे ऋत्विजः प्रजा वा वः त्रिष्टुभमिषं त्रिष्टुभाख्यमन्नम् इन्द्रः परमेश्वरः सोमाय आविवासति । पुरन्ध्या धिया अशेषप्राणिदेहाश्रयया स्वबुद्ध्या प्रप्र प्रकर्षेण प्रकर्षेणातितरां शस्यमाना त्रिष्टुप् प्रीतिं करोति सोमपानार्थमित्यर्थः । मन्दद्वीराय तस्य वीरस्य परमेश्वरस्य मदं प्रीतिं करोतीति मन्दद्वीरः सोमः । न त्वात्मप्रयोजनाय प्रीतिं करोति, किं तर्हि? वो मेधसातये यज्ञसिद्ध्यर्थम् । व इति गुरुत्वाद्, ईश्वरं प्रत्येव वा वहुवचनम् । तदा

वोऽन्नं त्रिष्टुभं वो मेधसातये भवद्दैवत्ययज्ञसिद्ध्यर्थं भवान् प्रप्राऽऽ-
विवासतीत्यर्थः ॥ १ ॥

**नदं व ओदतीनां नदं योयुवतीनाम् ।**
**पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥ २ ॥**
(ऋ.मं.८, सू.६९/२)

ओदतीनाम् उन्दनकर्त्रीणां वः अपां भवदीयानां पतिं वः पुरुषं प्राणं नदं नदनकर्तारं प्रति इषुध्यसि पतिर्भवसि । सृष्टौ सृष्टौ यो यः प्राणस्तं तं प्रति पतिर्भवसीति नदमिति पुनर्वचनम् । योयुवतीनां गमनशीलानाम् आकाशे पोप्लूयमानानाम् अघ्न्यानां धूमरूपेणा-दाह्यानां रेतोरूपेणाजराणां वा । धेनूनां जगत्पोषकाणाम् । 'धिनु पुष्टौ' इति धातोः । 'ता नदेन विहरति' इत्यादिश्रुतेः । पयसा सेचकानां देशाद्देशान्तरगमनशीलानाम् अघ्न्यानां हन्तुमयोग्यानां धेनूनां गवां पतिं वायुं प्रति इषुध्यसीति वा । 'वायुर्वाव गवां पतिः' इति श्रुतेः । धेनुशब्दाच्च । ओदतीनां भक्त्या सेचकानाम् । योयुवतीनाम् अतिशयेनात्मतत्त्वावगमकानाम् अघ्न्यानां नित्यानां धेनूनां धर्मार्थकामपोषकाणां वाचां पतिं वायुं प्रति पतिर्भवसीति वा । 'वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारस्स्वधाकार इति । तस्या द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च, हन्तकारं मनुष्याः स्वधाकारं पितरः तस्याः प्राण ऋषभो मनो वत्सः' इत्यादिश्रुतिभ्यः ॥ २ ॥

**ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।**
**जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः ॥ ३ ॥**
(ऋ.मं.८, सू.६९/३)

ताः पृश्नय आपो गावो वाचो वा, अस्य सूददोहसः प्राणस्य वायुस्थस्य परमेश्वरस्य सोमं श्रीणन्ति । अद्भिर्हि संसृष्टो भवति सोमः पय आदिना च शृतो भवति मन्त्रैर्वा गृह्यते । 'अथ सूददोहाः प्राणो वै सूददोहाः' इति श्रुतिश्च । शोभनमुदं कर्म ज्ञानं वा दोग्धीति सूददोहाः । उदेति उच्चो भवत्यनेन पुरुष इत्युदं ज्ञानादि । 'मनो वाव सोमः' तद्वाचः श्रीणन्ति स्वार्थैः । प्रश्नयोग्यत्वात्पृश्नयो वाचः, प्रशंसनरूपत्वात्प्रशंसनीयत्वाद्वा । प्रशंसनीयत्वमेवापां गवां च । देवानां जन्मनि यज्ञे । तत्र हि तेषामभिव्यक्तिः । पूर्वं ज्ञाने वा विशः प्रजाश्च श्रीणन्ति । मुख्यतस्ता एव श्रीणन्तीति चशब्दवर्जनम् । दिवस्त्रिषु आरोचनेषु । आदित्यचन्द्रविद्युत्पर्यन्तं स्थितानां देवानां जन्मनि । 'यज्ञो वै देवजन्म तत्र हि देवाः प्रादुर्भवन्त्यासूर्याचन्द्रमसावाविद्युतम् । ते वै लोकानधिश्रिताः' इत्यादिश्रुतेः । 'द्यौर्वाव विद्युत् तत्पतिं वायुमुपगम्य तेनैव परमुपगच्छति सैषा ब्रह्मलोके विराजते' इत्यादि श्रुतेर्द्यौरेव विद्युत् ॥ ३ ॥

**अर्चत प्रार्चत प्रियमेधासो अर्चत ।**
**अर्चन्तु पुत्रका उत पुरं न धृष्ण्वर्चत ॥ १ ॥**

(ऋ.मं.८, सू.६९/८)

अर्चनं यज्ञादि, प्रार्चनं ज्ञानध्यानादि । 'श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप' इति भगवद्वचनात् । प्रिययज्ञा अर्चत, प्रियज्ञानाः प्रार्चत । पुत्रका अल्पज्ञाना अप्यर्चत ।

'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत् सर्वकर्माणि विद्वान्युक्तस्समाचरन्' ॥ इति च ।

उतशब्दाज्ज्ञानिनामप्यर्चनं युक्तम् स्वाश्रमानुसारेणेति । 'अधा ते विष्णो विदुषा चिदर्ध्यस्तोमो यज्ञश्च राध्यो हविष्मता' इति श्रुतेः । किं तदर्चनीयम् ? धृष्णु धृष्टं परं ब्रह्म वासुदेवाख्यम् । पुरं देहं नार्चत ।

'प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथस्सुमध्यमे ।
प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने ॥'
इति भागवते ।

'सदेहमानिहरये प्रणमेत्केवलाय वा ।
न देहाय न तन्मानपराय च कथञ्चन ॥' इति व्यासस्मृतौ ।

पुनरर्चतेति तात्पर्यार्थः ॥ १ ॥

**अव॑ स्वराति॒ गर्ग॑रो गो॒धा परि॑ सनिष्वणत् ।**
**पिङ्गा॒ परि॑ चनिष्कद॒दिन्द्रा॑य॒ ब्रह्मोद्य॑तम् ॥ २ ॥**
(ऋ.मं.८, सू.६९/९)

गर्गरगोधापिङ्गादीनां घोषा अपि नादमात्रव्यञ्जकत्वेन भगवद्वाचका एवेत्याह अवस्वराति गर्गर इत्यादिना । एतत्समस्तमिन्द्रायैवेत्यर्थः । ब्रह्म वेदो विशेषत इन्द्रायैवोद्यतः । गर्गर इति पादभूषणमहामत्रकदधिपात्रहस्तिहस्तानां नाम । पिङ्गा चकोरी । अवपरीत्यल्पाधिक्यादिविशेषोऽपि तद्वाचक एवेति ज्ञापनाय । चनिष्कददित्यनुकरणशब्दः । सनिष्वणदित्यतिशयार्थे ।

'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव' इति श्रुतिः । 'दध्नो मथनशब्दश्चाप्यन्तर्नाद-

स्वरूपतः । भीपकत्वं हरेर्ब्रूयादन्तर्नादो हि भीषणे । गजबृंहितमप्येवं धिक्कारसहितं वदेत् । स्वरितेन समायोगाद्धिकृतौ स्वरितो यतः । महामत्रं जलाद्यैश्च युक्तमेतादृशं वदेत् । पादभूषा च धिक्कारं तत्कृतं स्वरितं वदेत् । अद्भुतत्वं हरेर्वक्ति पिङ्गाकण्ठगशब्दवत् । तामेवाद्भुततां वक्ति गृहगोधा पराऽपि च' इति शब्दतत्त्वे ।। ३ ।।

**आ यत्पतंन्त्येन्यः सुदुघा अनपस्फुरः ।**
**अपस्फुरं गृभायत सोममिन्द्राय पातवे ।। ३ ।।**

(ऋ.मं.८, सू.६९/१०)

यच्च एन्यो नद्य आपतन्ति तद्घोषश्चेन्द्रवाचकः ।

'नदीसमुद्रघोषाश्च नादत्वाच्छ्रैष्ठ्यवाचकाः ।
नादो हि श्रैष्ठ्यवाची स्यादेवं घोषाः परेऽपि च' इति च ।।

तदर्थं च नद्य आपतन्ति–

'भूतादिभूतोऽम्बुनिधानमध्ये भूत्वा हरिस्सर्वहरोऽतिधाम्ना ।
अगाधमम्भो विदधाति भस्म यो वाडवाग्निर्नृहरिर्विचिन्त्यः' ।।

इति वैहायससंहितायाम् ।

सुदुघाः सुष्ठु अपां दोहनकर्त्र्यः । स्फुरणापगमनमासां नास्तीत्यनपस्फुरः । नित्यचलनस्वभावाः । अपगतस्फुरणत्वेन सोमं गृभायत । अचलत्वेन मनो वा ।। ३ ।।

**यो व्यतीँरफाणयत् सुयुक्ताँ उप दाशुषे ।**
**तको नेता तदिद्वपुरुपमा यो अमुच्यत ।। १ ।।**

(ऋ.मं.८, सू.६९/१३)

व्यतीन् विशेषेणाधिकान् देवान् अफाणयत् विस्तारयामास । दाशुषे यजमानाय तत्समीपे । 'फण विस्तारे' इति धातोः । सुयुक्तान् सुयोगरतान् ।

'विशेषेणाधिकत्वेन व्यतयो देवतास्स्मृताः ।
नित्ययोगरताश्चैव नारायणपरायणाः ।
ता एव चेन्द्रियात्मानस्तान्विस्तारयतीश्वरः ।
मन आदीन्द्रियाणां तु शक्तिविस्तार एव तु ।
विस्तारो देवतानां स्याद् भक्तेषु हरिणा कृतः' ।
इति प्रकाशसंहितायाम् ।

'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीं रवीविपत्' इति च श्रुतिः ।

'स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम्' इति च ।

'न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥' इति भारते ॥

तक्को जगत्कर्ता । 'तक निर्माणे' इति धातोः । 'न वर्तवे प्रसवः सर्गतक्तः' इति प्रयोगाच्च । नेता च सर्वस्य । तदेव वपुस्सः । यत्तज्जगत्कर्तृनेतृरूपम् ।

'देहदेहिविभागश्च न क्वचित्परमेश्वरे ।
गुणतद्वद्विभागो वा नेह नानेति हि श्रुतिः' ॥ इति पाद्मे ।

'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति' ।

'सद्देहस्सुखगन्धश्च ज्ञानभास्सत्पराक्रमः ।
ज्ञानज्ञानस्सुखसुखस्स विष्णुः परमोऽक्षरः' ॥ इति श्रुतेश्च ।

'विशुद्धविज्ञानमरीचिमालया सचित्ररत्नप्रकरप्रकाशया ।
प्रकाशिताशेषजगत्स्वरूपया प्रभुः सदाह्लादतनुर्विभूपितः' ॥
इति पुरुषोत्तमसंहितायाम् ।

उपमा उपमायाम् उपमाविषये, अमुच्यत त्यक्तोऽभवत् निरुपम इत्यर्थः ।

'अल्पाक्षरेण शक्येऽपि वक्तुं वह्वक्षरं यदि ।
उक्तस्याधिक्यमेवात्र निपेधेऽशेपतो भवेत्' ॥
इति शब्दनिर्णये ॥ २ ॥

**अतीदुं शक्र ओहत इन्द्रो विश्वा अति द्विषः ।**
**भिनत्कनीनं ओदनं पच्यमानं परो गिरा ॥ २ ॥**
(ऋ.मं.८, सू.६९/१४)

विश्वा विश्वान् द्विषो अज्ञानपापादीन् अतीत्य शक्तो विष्णुः स्वभक्तानतिवहत्येव हि ।

'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' ।

'तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम्' ॥
इत्यादिप्रसिद्धिं उशब्देन आह ।

द्विषोऽतीत्यातिशयेनात्मानं प्रत्येव ओहतेत्यतिशब्दद्वयार्थः । ओदनम् उन्दतेः कर्मबन्धनम् अभिनद्भगवान् कानीनो बादरायणः । परः परमात्मा गिरैव पच्यमानं परिपाककाले ।

'संश्लेषादोदनं कर्म पच्यमानं गिरैव हि ।
अभिनद्भगवान् व्यासस्स्वभक्तानामशेषतः'

इति व्याससंहितायाम् ॥ २ ॥

**अ॒र्भ॒को न कु॑मा॒रको॑ऽधि॑ तिष्ठ॒न्नव॒ं रथ॑म् ।**
**स प॑क्षन्महि॒षं॑ मृ॒गं पि॒त्रे मा॒त्रे वि॑भु॒क्रतु॑म् ॥ ३ ॥**

(ऋ.मं.८, सू.६९/१५)

अर्भक इव स्थितः । नवं रथमध्यतिष्ठत् । कुमारकः कुत्सित-मारकः । अर्भक इव सूक्ष्मदेहः पूर्वं पूर्वं देहं परित्यज्य नवं नवं देहमध्यतिष्ठज्जीवमादाय ।

'जीवदेहं परित्यज्य सह जीवेन चेश्वरः ।
जीवस्यान्यच्छरीरं च समुत्पाद्य विशत्यजः'

इति मान्यसंहितायाम् ।

कुमारक इवार्भकः सूक्ष्मदेह इति च । अर्भकस्सूक्ष्मदेहोऽपि न कुमार (कुमारक) इति वा । सपक्षत् परिपक्वज्ञानादिगुणमकरोत् । महिषं महान्तं ब्रह्माणम् । मृगं मृगयन्तं स्वात्मानम् । पित्रे स्वस्मै मात्रे लक्ष्म्यै । विभुक्रतुं पूर्णज्ञानम् । पितृमातृविषये पूर्णज्ञानम् । पुनः पूरयामासेत्यर्थः ।

'ज्ञानपूर्णं विधातारं मोक्षदानेन केशवः ।
स्वपुत्रं पूरयामास महिषं महतां महान्' ॥ इति प्रवृत्ते ॥ ३ ॥

यथास्थिताः प्रज्ञाताः । इतस्ततस्संयोजनं विना यथास्थितशंसनं पथिः(थः) प्राप्तिः ॥

[स यो व्याप्तो गतश्रीरिव मन्येताविहृतं षोळशिनं शंसयेन्नेच्छन्दसां कृच्छ्रादवपद्या इत्यथ यः पाप्मानमपजिघांसुः स्याद् विहृतं षोळशिनं शंसयेद् व्यतिषक्त इव वै पुरुषः पाप्मना व्यतिषक्तमेवास्मै तत् पाप्मानं शमलमप हन्त्यप पाप्मानं हते य एवं वेद ।] (ऐत.ब्रा.पं.४, अ.२, खं.४, वा.३)

व्याप्तो विशेषेणापन्नः । अविहृतमसंसृष्टम् । कृच्छ्रादयथावस्थितशंसननिमित्तदुःखादवाग्गतिं गतश्रीकतामेव न प्राप्नुयाम् ।

'विलोमश्शत्रुज(क्ष)यकृत्संसर्गः पापनाशनः ।
यथास्थितः श्रीकरस्स्यात् स्वाध्यायः शंसनेऽपि च' ॥ इति प्रवृत्ते ।

'गतश्रियः श्रियो हानिं पापहानिं परस्य च ।
संसर्गश्छन्दसां कुर्याच्छ्रियो वृद्धिं यथास्थितः'
इति स्वाध्यायतत्त्वे ।

'किञ्चित्वे चोभयत्वे च संशये सदृशे तथा ।
इवशब्दः प्रयुज्येत न्यक्कारेऽपि च पण्डितैः' ॥ इति शब्दनिर्णये ।

अतो गतश्रीत्वसंशयेऽपीत्यर्थः । इतस्ततो विशेषेण (सं)हृतं (संयोजितं) विहृतम् ।

'पापानां व्यतिषक्तत्वाद्व्यतिषक्तं विनाशकम् ।
धनस्याव्यतिषङ्गेण व्यतिषङ्गोऽविनाशकः ।
सदृशं सदृशस्यैव यतस्स्यात्प्रविनाशकम् ।

तथाप्यप्राप्तनाशस्य धनस्य बलवत्त्वतः ।
शङ्कयान्न विनाशाय पापस्येच्छासमेधितम् ।
संसृष्टं स्याद्विनाशाय नहीच्छा धनसंक्षये' ॥

इति स्वाध्यायतत्वे ॥

अव्यतिषक्तत्वं च मोक्षे विद्यत इत्यत्रोभयार्थ इवशब्दः । एवम्भूतेन शंसनेन पाप्मानमपहन्ति । शमलं रागादिकं च । पापस्य पृथगुक्तेः ।

'शमलं पापमुद्दिष्टं रागद्वेषादिकं तथा ।
अपराधश्च शमलं मलं च शमलं विदुः' ॥ इति शब्दनिर्णये ।

य एवमुपास्ते सोऽपि पाप्मानमपहन्ति ।

'ऋक्षु संसृज्यमानासु प्रोच्यमानं जनार्दनम् ।
पुंसंसृष्टस्य पापस्य निहन्तारं विशेषतः ।
तत्प्रसादेन मुक्तस्य पापासंसृष्टतामपि ।
ध्यायन् कर्माणि कृत्वापि मुच्यते सर्वपातकैः' ॥ इति प्रवृत्ते ॥

न चैवमादिवाक्यानां स्वार्थे प्रामाण्याभावः । सिद्धार्थे प्रामाण्यस्य साधितत्वात् । अविरोधाच्च । न च बह्वर्थेषु तात्पर्यकल्पने कल्पनागौरवम् । वचनेनैव प्रतीयमानत्वाद् अर्थस्य कल्पनाभावात् । न च वाचनिकार्थस्तात्पर्यार्थ इति विशेषः । तन्मानाभावात् ।

यत्र वाचनिकार्थादन्यस्तात्पर्यार्थः प्रतीयते लौकिकवाक्येषु न तत्र साक्षाद्वचनं प्रबोधकम् । वचनलिङ्गाकाऽनुमा हि सा ।

विरोधादमुख्यवृत्तिर्वा । आप्तत्वनिश्चये । आप्तत्वानिश्चये प्रामाण्यमेव न भवति ।

वेदवाक्यस्य तु वाचनिकार्थं विना नैवान्यो युज्यते ।
वाचनिकानां तु बहूनामप्यविरोधे स्वीकार्यता ।

'ओं स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति सूत्रम् ।

'वानात्सूतेर्देवनाद्वासुदेवो वासाद् द्युतेश्छादनात्क्रीडया त ।
बलादसुत्वाद्दातृतो वर्तनाच्च तं वासुदेवं प्रवदन्ति वेदाः' ॥
इत्यादि च सौकरायणश्रुतिः ।

मोक्षेऽपि सुप्तिरस्तीत्याशङ्कानिवृत्त्यर्थमेवान्यतरपदम् ।

'रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत् ।
तत्रापि यौगिको मुख्यस्सर्वत्रास्ति स वैदिके ।
अनवस्थानिवृत्त्यर्थं यौगिके रूढकल्पना ।
ज्ञाते विशेषविज्ञानं व्यवहारोऽपि रूढितः' ॥ इति ब्रह्मतर्के ॥

वाचनिकमर्थं परित्यज्य नियोगार्थकल्पने श्रुतहानिरश्रुतकल्पनेति सर्वदोषाधिकौ तस्य व्यर्थमापद्येते । एवं च वदतो विधिशब्दा निरर्थकाः सिद्धार्था वा, सिद्धशब्दाः वा स्वार्थे प्रमाणभूता इत्युक्ते किमुत्तरम् ? न च कारणं किञ्चिद्वाचनिकानां बहूनामप्यर्थानां त्यागे । प्रतीयमाने तु विरोधे तदन्योऽर्थः स्वीकार्यः । वाचनिक एव । सोऽपि वाचनिक एवेत्यपि तत एव सिद्ध्यति ।

'मुख्यार्थानां च सर्वेषां तारतम्यं च विद्यते ।
तत्राऽपि परमो मुख्यो वाच्योऽशेषरवैर्हरिः ।

तत्तन्मुख्याविरोधेन तदन्यार्थस्य सङ्ग्रहः ।
स्वतो मुख्यविरोधे तु त्याज्योऽन्योऽर्थोऽखिलेष्वपि ।
इति सर्वत्र नियमः शब्दार्थज्ञानभूमिषु' ॥ इति च ॥

न च क्रियायामेव प्रयोजनं न सिद्ध इति युक्तम् । ज्ञानमात्रेऽपि महाप्रयोजनदर्शनात् पितृजीवनादिवाक्ये । आह च स्वयं भगवान्–

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।
यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ।
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत' ॥ इति ।

'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप' ॥ इति च ।

'ध्यानन्त्वखिलकर्मभ्यो ध्यानाच्च ज्ञानमुत्तमम् ।
न ज्ञानसदृशं किञ्चित् पुरुषार्थप्रसिद्धये' ॥ इति प्रवृत्ते ।

'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय' । इति च ।

'अशेषकर्मपूगोऽपि न विष्णुध्यानलेशभाक् ।
तच्च ध्यानं हरेर्ज्ञानकोट्यंशाय न पूर्यते' ॥ इति कर्मविवेके ।

'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति च श्रुतिः ॥

न च कर्ममात्रे पर्यवसितिर्वेदस्य । सुखज्ञानस्यैव प्रयोजनत्वात् । अतस्सिद्धस्यैव प्रयोजनत्वं सिद्धम् । प्रशंसादीनां च तात्पर्यं वाचनिकार्थात्यागेनैव कथितं स्वयं भगवता– 'ओं भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति' इति । तस्माद्विरुद्धवत्प्रतीयमानानि प्रशंसादीनि ज्ञानसहकार्यपेक्षया योजनीयानि । पुराणादीनां तु श्रुत्यादि विरोधे गौणोऽप्यर्थो युज्यते ।

'कुहकं चेन्द्रजालं च विरुद्धाचरणानि च ।
दर्शयित्वा जनं सर्वं मोहयाशु महेश्वर' ॥ इत्यादि वाराहे ॥

[ उद्यद् ब्रध्नस्य विष्टपमित्युत्तमया परि दधाति स्वर्गो वै लोको ब्रध्नस्य विष्टपं स्वर्गमेव तं लोकं यजमानं गमयत्यपाः पूर्वेषां हरिवः सुतानामिति यजति सर्वेभ्यो वा एष सवनेभ्यः सन्निर्मितो यत् षोळषी तद् यदपाः पूर्वेषाः हरिवः सुतानामिति यजति पीतवद् वै प्रातःसवनं प्रातःसवनादेवैनं तत् सन्निर्मिमीतेऽथो इदं सवनं केवलं त इति माध्यन्दिनं वै सवनं केवलं माध्यन्दिनादेवैनं तत् सवनात् सन्निर्मिमीते ममद्धि सोमं मधुमन्तमिन्द्रेति मद्वद्वै तृतीयसवनं तृतीयसवनादेवैनं तत् सन्निर्मिमीते सत्रा वृषन् जठर आवृषस्वेति वृषण्वद्वै षोळषिनो रूपं सर्वेभ्यो वा एष सवनेभ्यः सन्निर्मितो यत् षोळषी तद् यदपाः पूर्वेषां हरिवः सुतानामिति यजति सर्वेभ्य एवैनं तत् सवनेभ्यः सन्निर्मिमीते सर्वेभ्यः सवनेभ्यः सन्निर्मितेन षोळशिना राध्नोति य एवं वेद ॥ ] (ऐत.ब्रा.पं.४, अ.१, खं.४, वाक्य.४) ]

**उद्यद् ब्रध्नस्य विष्टपं गृहमिन्द्रश्च गन्वहि ।**
**मध्वः पीत्वा सचेवहि त्रिस्सप्त सख्युः पदे ॥ १ ॥**
(ऋ.मं.८, सू.६९/७)

ब्रध्नस्य सूर्यस्य विष्टपं स्वर्गमुद्गन्वहि इन्द्रोऽहं च । यत्तदिन्द्रगृहं ब्रध्नविष्टपं मध्वः पीत्वा तत्र सचेवहि सुखमनुभवाव । सख्युरिन्द्रस्य त्रिस्सप्तस्थानेषु ।

'एकविंशतिदिव्यानि स्थानानि दिवि चक्रिणः ।
वज्रिणो वाऽपि तद्भक्तैर्भुज्यन्ते तानि याज्ञिकैः' ॥ इति प्रवृत्ते ॥

**अपाः पूर्वेषां हरिवः सुतानामथो इदं सवनं केवलं ते ।**
**ममद्धि सोमं मधुमन्तमिन्द्र सत्रा वृषंजठर आ वृषस्व**
**॥ २ ॥** (ऋ.मं.१०, सू.९६/१३)

॥ इति कर्मनिर्णयमूलभूतवेदभागः सम्पूर्णः ॥

पूर्वान् सुतान् प्रातस्सवनगान्सोमानपाः । हरीनिन्द्रियाणि वर्तयतीति हरिवः । हरिभिर्वर्तत इति वा । इदं माध्यन्दिनसवनं केवलं ते । अथो इत्यर्थान्तरम् । मधुमन्तं सोमं जठरे आवृषस्व आसिञ्च, ममद्धि च । सत्रा अस्मत्त्राणेन सह ।

पीतशब्दवत् । अपूर्वपानत्वात्तदेव पानं मुख्यमिति पीतशब्दः । इन्द्रस्य केवलत्वात्केवलं माध्यन्दिनं सवनम् । ममद्धीति तृतीयसवनम् । तत्र हि मदो विशेषतो भवति, पूर्तेः । इति सवनत्रयरूपता षोळशिनः । वृषण्वत् वृष्णः इन्द्रस्य विशेषतः प्रियत्वात् । एवं चतूरूपता षोळशिनः । राध्नोति ऋद्धो भवति ।

विहृतपक्षे तु– 'पादान् व्यवधायार्धर्चशः शंसेत् । पूर्वासां पूर्वाणि पदानि । गायत्र्यः पङ्क्तिभिः पङ्क्तीनां तु द्वे द्वे पदे शिष्येते ताभ्यां प्रणुयात् । उष्णिहो बृहतीभिः । उष्णिहान्तूत्तमान्पादान् द्वौ द्वौ कुर्यात् चतुरक्षरमाद्यम् । द्विपदाश्चतुर्धा कृत्वा प्रथमां त्रिष्टुभा । उत्तरा जगतीभिः । उत्तमायाश्चतुर्थमक्षरमन्त्यं पूर्वस्याऽद्यमुत्तरस्य । अनुष्टुभमतिच्छन्दःस्ववददध्यात् । द्वितीयतृतीययोस्तृतीययोः पादयोरवसानत उपदध्यात् । प्रचेतनेति पूर्वस्याम् । प्रचेतयेत्युत्तर-स्याम् । उत्तरास्वितरान् पादान् षष्ठान्कृत्वाऽनुष्टुप्कारं शंसेत्' ॥

(आ.श्रौ.सू.६-३)

महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु–

"एवा ह्येवा अपाः पूर्वेषां हरिवः सुतानाम् एवाहीन्द्रं अथो इदं सवनं केवलन्ते । एवाहि शक्रो ममद्धि सोमं मधुमन्तमिन्द्र वशी हि शक्रः सत्रा वृषं जठर आवृषस्वेति" ।

भगवद्भक्तिज्ञानवैराग्यपूर्वकं च कर्म कर्तव्यम् ।

'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे सुकृते तेऽनु भूत्वा इमं लोकं हीनकरं वा विशन्ति' ॥

'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनश्शश्वदभद्रमीश्वरे नचाऽर्पितं कर्म यदप्यकारणम्' ॥

'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' ॥

‘त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान्’ ॥

‘मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः’ ॥

‘ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढास्तान्विद्धि नष्टानचेतसः’ ॥

‘तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः ।
क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः’ ॥

‘एष उ एव दाश्वान् य एवं वेद’ ।

‘यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति’ ॥

‘परं भावमजानन्तो मम भूतमहेश्वरम् ।
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः’ ॥

‘सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे’ ॥

‘विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् ।
तिष्ठमानस्य तद्विदः’ इत्यादिश्रुतिस्मृतिभ्यः ॥

नमो नारायणायाजभवशक्रोष्णरुङ्मुखैः ।
सदा वन्दितपादाय श्रीपाय प्रेयसेऽधिकम् ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः कर्मनिर्णयः समाप्तः ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता

# सदाचारस्मृतिः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

यस्मिन् सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो याति परं जयति सोऽच्युतः ॥ १ ॥

स्मृत्वा विष्णुं समुत्थाय कृतशौचो यथाविधि ।
धौतदन्तः समाचम्य स्नानं कुर्याद् विधानतः ॥ २ ॥

उद्धृतेति मृदालिप्य द्विषडष्टषडक्षरैः ।
त्रिर्निमज्याऽप्यसूक्तेन प्रोक्षयित्वा पुनस्ततः ।
मृदाऽऽलिप्य निमज्य त्रिस्त्रिर्जपेदघमर्षणम् ॥ ३ ॥

स्रष्टारं सर्वलोकानां स्मृत्वा नारायणं परम् ।
यतश्वासो निमज्याप्सु प्रणवेनोत्थितस्ततः ।
सिञ्चेत् पुरुषसूक्तेन स्वदेहस्थं हरिं स्मरन् ॥ ४ ॥

वसित्वा वास आचम्य प्रोक्ष्याचम्य च मन्त्रतः ।
गायत्र्या चाञ्जलिं दत्वा ध्यात्वा सूर्यगतं हरिम् ॥ ५ ॥

मन्त्रतः परिवृत्याथ समाचम्य सुरादिकान् ।
तर्पयित्वा निपीड्याथ वासो विस्तृत्य चाञ्जसा ॥ ६ ॥

अर्कमण्डलगं विष्णुं ध्यात्वैव त्रिपदीं जपेत् ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ॥ ७ ॥

आसूर्यदर्शनात्तिष्ठेत्ततस्तूपविशेत वा ।

पूर्वां सन्ध्यां सनक्षत्रामुत्तरां सदिवाकराम् ।
उत्तरामुपविश्यैव वाग्यतः सर्वदा जपेत् ॥ ८ ॥

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ ९ ॥

गायत्र्यास्त्रिगुणं विष्णुं ध्यायन्नष्टाक्षरं जपेत् ।
प्रणम्य देवान्विप्रांश्च गुरूंश्च हरिपार्षदान् ।
एवं सर्वोत्तमं विष्णुं ध्यायन्नेवार्चयेद्धरिम् ॥ १० ॥

ध्यानप्रवचनाभ्यां च यथायोग्यमुपासनम् ।
धर्मेणेज्यासाधनानि साधयित्वा विधानतः ।
स्नात्वा सम्पूजयेद्विष्णुं वेदतन्त्रोक्तमार्गतः ॥ ११ ॥

वैश्वदेवं बलिं चैव कुर्यान्नित्यं तदर्पणम् ।
इष्टं दत्तं हुतं जप्तं पूर्तं यच्चात्मनः प्रियम् ।
दारान्सुतान्प्रियान्प्राणान् परस्मै सन्निवेदयेन् ॥ १२ ॥

भुक्तशेषं भगवतो भृत्यातिथिपुरस्सरः ।
भुञ्जीत हृद्गतं विष्णुं स्मरंस्तद्गतमानसः ।
आचम्य मूलमन्त्रेण कोष्ठं स्वमभिमन्त्रयेत् ॥ १३ ॥

वेदशास्त्रविनोदेन प्रीणयन् पुरुषोत्तमम् ।
अहःशेषं नयेत्सन्ध्यामुपासीताथ पूर्ववत् ॥ १४ ॥

यामात्परत एवाथ स्वपेद्ध्यायन् जनार्दनम् ।
अन्तराले ततो बुद्ध्वा स्मरेत बहुशो हरिम् ॥ १५ ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वाऽनुसृतस्स्वभावम् ।
करोति यद्यत्सकलं परस्मै
नारायणायेति समर्पयेत्तत् ॥ १६ ॥

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १७ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १८ ॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १९ ॥

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ २० ॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत' ॥ २१ ॥

'रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो नित्यं नाहं कञ्चिदुपाश्रितः' ॥ २२ ॥

'ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ' ॥ २३ ॥

'ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः' ॥ २४ ॥

'द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः' ॥ २५ ॥

'स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः' ॥ २६ ॥

'धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत ।
पापं भवति धर्मोऽपि यो न भक्तैः कृतो हरेः' ॥ २७ ॥

'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
नित्यं भवेच्च मन्निष्ठो बुभूषुः पुरुषस्सदा' ॥ २८ ॥

एष नित्यः सदाचारो गृहिणो वनिनस्तथा ।
वैश्वदेवं बलिं दन्तधावनं चाप्यृते वटोः ॥ २९ ॥

एवमेव यतेः स्वीयवित्तेन तु विना सदा ।
मूलमन्त्रैः सदा स्नानं विष्णोरेव च तर्पणम् ॥ ३० ॥

विशेषो निष्क्रिययतेरजलाञ्जलिना तथा ।
तर्पणं तु हरेरेव यतेरन्यस्य चोदितम् ॥ ३१ ॥

समिद्धोमो वटोश्चैव स्मृत्वा विष्णुं हुताशने ।
सर्ववर्णाश्रमैर्विष्णुरेक एवेज्यते सदा ।
रमाब्रह्मादयस्तस्य परिवारत एव तु ॥ ३२ ॥

'कविं पुराणमनुशासितारम्
अणोरणीयांसमनुस्मरेद् यः ।
सर्वस्य धातारमचिन्त्यरूपम्
आदित्यवर्णं तमसः परस्तात्' ॥ ३३ ॥

'वेदाहमेतं पुरुषं महान्तं
आदित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचिन्त्य धीरः
नामानि कृत्वाऽभिवदन् यदास्ते ॥ ३४ ॥

धाता पुरस्ताद्यमुदाजहार
शक्रः प्रविद्वान्प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति
नान्यः पन्था अयनाय विद्यते' ॥ ३५ ॥

आनन्दतीर्थमुनिना व्यासवाक्यसमुद्धृतिः ।
सदाचारस्य विषये कृता सङ्क्षेपतः शुभा ॥ ३६ ॥

अशेषकल्याणगुणनित्यानुभवसत्तनुः ।
अशेषदोषरहितः प्रीयतां पुरुषोत्तमः ॥ ३९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता सदाचारस्मृतिः समाप्ता ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# कृष्णामृतमहार्णवः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

अर्चितः संस्मृतो ध्यातः कीर्तितः कथितः श्रुतः ।
यो ददात्यमृतत्वं हि स मां रक्षतु केशवः ॥ १ ॥

तापत्रयेण सन्तप्तं यदेतदखिलं जगत् ।
वक्ष्यामि शान्तये तस्य कृष्णामृतमहार्णवम् ॥ २ ॥

ते नराः पशवो लोके किं तेषां जीवने फलम् ।
यैर्न लब्धा हरेर्दीक्षा नार्चितो वा जनार्दनः ॥ ३ ॥

संसारेऽस्मिन् महाघोरे जन्मरोगभयाकुले ।
अयमेको महाभागः पूज्यते यदधोक्षजः ॥ ४ ॥

स नाम सुकृती लोके कुलं तेनाभ्यलङ्कृतम् ।
आधारः सर्वभूतानां येन विष्णुः प्रसादितः ॥ ५ ॥

यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।
तद्विशिष्टफलं नृणां सदैवाराधनं हरेः ॥ ६ ॥

कलौ कलिमलध्वंसिसर्वपापहरं हरिम् ।
येऽर्चयन्ति सदा नित्यं तेऽपि वन्द्या यथा हरिः ॥ ७ ॥

नास्ति श्रेयस्तमं नृणां विष्णोराराधनान्मुने ।
युगेऽस्मिंस्तामसे लोके सततं पूज्यते नृभिः ॥ ८ ॥

अर्चिते देवदेवेशे शङ्खचक्रगदाधरे ।
अर्चिताः सर्वदेवाः स्युर्यतः सर्वगतो हरिः ॥ ९ ॥

स्वर्चिते सर्वलोकेशे सुरासुरनमस्कृते ।
केशवे कंसकेशिघ्ने न याति नरकं नरः ॥ १० ॥

सकृदभ्यर्च्य गोविन्दं विल्वपत्रेण मानवः ।
मुक्तिभागी निरातङ्की विष्णुलोके चिरं वसेत् ॥ ११ ॥

शङ्कर (उवाच)

सकृदभ्यर्चितो येन देवदेवो जनार्दनः ।
यत्कृतं तत्कृतं तेन सम्प्राप्तं परमं पदम् ॥ १२ ॥

सकृदभ्यर्चितो येन हेलयाऽपि नमस्कृतः ।
स याति परमं स्थानं यत्सुरैरपि दुर्लभम् ॥ १३ ॥

नारदः

समस्तलोकनाथस्य देवदेवस्य शार्ङ्गिणः ।
साक्षाद्भगवतो विष्णोः पूजनं जन्मनः फलम् ॥ १४ ॥

पुलस्त्यः

भक्त्या दूर्वाङ्कुरैः पुष्पैः पूजितः पुरुपोत्तमः ।
हरिर्ददाति हि फलं सर्वयज्ञैश्च दुर्लभम् ॥ १५ ॥

विधिना देवदेवेशः शङ्खचक्रधरो हरिः ।
फलं ददाति सुलभं सलिलेनापि पूजितः ॥ १६ ॥

नरके पच्यमानस्तु यमेन परिभाषितः ।
किं त्वया नार्चितो देवः केशवः क्लेशनाशनः ॥ १७ ॥

धर्मः

द्रव्याणामप्यभावे तु सलिलेनापि पूजितः ।
यो ददाति स्वकं स्थानं स त्वया किं न पूजितः ॥ १८ ॥

नरसिंहो हृषीकेशः पुण्डरीकनिभेक्षणः ।
स्मरणान्मुक्तिदो नृणां स त्वया किं न पूजितः ॥ १९ ॥

ब्रह्मा

गर्भस्थिता मृता वाऽपि मुषितास्ते सुदूषिताः ।
न प्राप्ता यैर्हरेर्दीक्षा सर्वदुःखविमोचनी ॥ २० ॥

मार्कण्डेयः

सकृदभ्यर्चितो येन देवदेवो जनार्दनः ।
यत्कृतं तत्कृतं तेन सम्प्राप्तं परमं पदम् ॥ २१ ॥

धर्मार्थकाममोक्षाणां नान्योपायस्तु विद्यते ।
सत्यं ब्रवीमि देवेश हृषीकेशार्चनादृते ॥ २२ ॥

तस्य यज्ञवराहस्य विष्णोरमिततेजसः ।
प्रणामं ये प्रकुर्वन्ति तेषामपि नमो नमः ॥ २३ ॥

मरीचिः

अनाराधितगोविन्दैर्नरैः स्थानं नृपात्मज ।
न हि सम्प्राप्यते श्रेष्ठं तस्मादाराधयाच्युतम् ॥ २४ ॥

अत्रिः

परः पराणां पुरुषस्तुष्टो यस्य जनार्दनः ।
स चाप्नोत्यक्षयं स्थानमेतत्सत्यं मयोदितम् ॥ २५ ॥

अङ्गिराः

यस्यान्तः सर्वमेवेदमच्युतस्याव्ययात्मनः ।
तमाराधय गोविन्दं स्थानमग्र्यं यदीच्छसि ॥ २६ ॥

पुलस्त्यः

परं ब्रह्म परं धाम योऽसौ ब्रह्म सनातनम् ।
तमाराध्य हरिं याति मुक्तिमप्यतिदुर्लभाम् ॥ २७ ॥

ऐन्द्रमिन्द्रः परं स्थानं यमाराध्य जगत्पतिम् ।
प्राप यज्ञपतिं विष्णुं तमाराधय सुव्रत ॥ २८ ॥

प्राप्नोत्याराधिते विष्णौ मनसा यद्यदिच्छति ।
त्रैलोक्यान्तर्गतं स्थानं किमु लोकोत्तरोत्तरम् ॥ २९ ॥

ये स्मरन्ति सदा विष्णुं शङ्खचक्रगदाधरम् ।
सर्वपापविनिर्मुक्ताः परं ब्रह्म विशन्ति ते ॥ ३० ॥

ततोऽनिरुद्धं देवेशं प्रद्युम्नं च ततः परम् ।
ततः सङ्कर्षणं देवं वासुदेवं परात्परम् ॥ ३१ ॥

वासुदेवात् परं नास्ति इति वेदान्तनिश्चयः ।
वासुदेवं प्रविष्टानां पुनरावर्तनं कुतः ॥ ३२ ॥

आत्रेयः

यो यानिच्छेन्नरः कामान् नारी वा वरवर्णिनी ।
तान्समाप्नोति विपुलान्समाराध्य जनार्दनम् ॥ ३३ ॥

ब्रह्मा

बाहुभ्यां सागरं तर्तुं क इच्छेत पुमान् भुवि ।
वासुदेवमनाराध्य को मोक्षं गन्तुमिच्छति ॥ ३४ ॥

कौशिकः

अनाराधितगोवन्दा ये नरा दुःखभागिनः ।
आराध्य वासुदेवं स्युर्नित्यानन्दैकभागिनः ॥ ३५ ॥

शङ्करः

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्योक्तं हरिसंस्मरणं परम् ॥ ३६ ॥

(नाम्नोऽस्ति यवती शक्तिः पापनिर्हरणे हरेः ।
तावत्कर्तुं न शक्नोति पातकं पातकी जनः ॥ ३७ ॥)

ब्रह्मा

न ह्यपुण्यवतां लोके मूढानां कुटिलात्मनाम् ।
भक्तिर्भवति गोविन्दे स्मरणं कीर्तनं तथा ॥ ३८ ॥

तदैव पुरुषो मुक्तो जन्मदुःखजरादिभिः ।
जितेन्द्रियो विशुद्धात्मा यदैव स्मरते हरिम् ॥ ३९ ॥

प्राप्ते कलियुगे घोरे धर्मज्ञानविवर्जिते ।
न कश्चित्स्मरते देवं कृष्णं कलिमलापहम् ॥ ४० ॥

न कलौ देवदेवस्य जन्मदुःखापहारिणः ।
करोति मर्त्यो मूढात्मा स्मरणं कीर्तनं हरेः ॥ ४१ ॥

ये स्मरन्ति सदा विष्णुं विशुद्धेनान्तरात्मना ।
ते प्रयान्ति भयं त्यक्त्वा विष्णुलोकमनामयम् ॥ ४२ ॥

गर्भजन्मजरारोगदुःखसंसारवन्धनैः ।
न बाध्यते नरो नित्यं वासुदेवमनुस्मरन् ॥ ४३ ॥

यममार्गं महाघोरं नरकाणि यमं तथा ।
स्वप्नेऽपि नैव पश्येत यः स्मरेद्गरुडध्वजम् ॥ ४४ ॥

हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥ ४५ ॥

गोविन्दस्मरणं पुंसां पापराशिमहाचलम् ।
असंशयं दहत्याशु तूलराशिमिवानलः ॥ ४६ ॥

अगस्त्यः

स्मरणादेव कृष्णस्य पापसङ्घातपञ्जरः ।
शतधा भेदमायाति गिरिर्वज्रहतो यथा ॥ ४७ ॥

कृष्णे रताः कृष्णमनुस्मरन्ति तद्भावितास्तद्गतमानसाश्च ।
भिन्नेऽपि देहे प्रविशन्ति कृष्णं हविर्यथा मन्त्रहुतं हुताशे ॥

सा हानिस्तन्महच्छिद्रं सा चान्धजडमूकता ।
यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ॥ ४९ ॥

नारायणो नाम नरो नराणां प्रसिद्धचोरः कथितः पृथिव्याम् ।
अनेकजन्मार्जितपापसञ्चयं हरत्यशेषं स्मृतमात्र एव ॥ ५० ॥

यस्य संस्मरणादेव वासुदेवस्य चक्रिणः ।
कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥ ५१ ॥

किं तस्य वहुभिस्तीर्थैः किं तपोभिः किमध्वरैः ।
यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥ ५२ ॥

ये मानवा विगतरागपरावरज्ञा
नारायणं सुरगुरुं सततं स्मरन्ति ।
ध्यानेन तेन हतकिल्विषचेतनास्ते
मातुः पयोधररसं न पुनः पिवन्तिः ॥ ५३ ॥

हे चित्त चिन्तयस्वेह वासुदेवमहर्निशम् ।
नूनं यश्चिन्तितः पुंसां हन्ति संसारवन्धनम् ॥ ५४ ॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ५५ ॥

स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥ ५६ ॥

वेदेषु यज्ञेषु तपस्सु चैव दानेषु तीर्थेषु व्रतेषु यच्च ।
इष्टेषु पूर्तेषु च यत्प्रदिष्टं पुण्यं स्मृते तत्खलु वासुदेवे ॥ ५७ ॥

आराध्यैवं नरो विष्णुं मनसा यद्यदिच्छति ।
फलं प्राप्नोति विपुलं भूरि स्वल्पमथापि वा ॥ ५८ ॥

यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥ ५९ ॥

कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृत्सङ्कीर्तितेऽच्युते ॥ ६० ॥

अनायासेन चायान्ति मुक्तिं केशवसंश्रिताः ।
तद्विघाताय जायन्ते शक्राद्याः परिपन्थिनः ॥ ६१ ॥

चतुःसागरमासाद्य जम्बूद्वीपोत्तमे क्वचित् ।
न पुमान्केशवादन्यः सर्वपापचिकित्सकः ॥ ६२ ॥

यदभ्यर्च्य हरिं भक्त्या कृते वर्षसहस्रकम् ।
फलं प्राप्नोति विपुलं कलौ सङ्कीर्त्य केशवम् ॥ ६३ ॥

क्षीयते तु यदा धर्मः प्राप्ते घोरे कलौ युगे ।
तदा न कीर्तयेत्कश्चिन्मुक्तिदं देवमच्युतम् ॥ ६४ ॥

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्विमुच्यते सद्यः सिंहत्रस्तमृगैरिव ॥ ६५ ॥

नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी ।
तथाऽपि नरके घोरे पतन्तीत्येतदद्भुतम् ॥ ६६ ॥

आर्ता विषण्णाः शिथिलाश्च भीता
घोरेषु च व्याधिषु वर्तमानाः ।
सङ्कीर्त्य नारायणशब्दमात्रं
विमुक्तदुःखाः सुखिनो भवन्ति ॥ ६७ ॥

कौशिकः

अनाराधितगोविन्दा ये नरा दुःखभागिनः ।
आराध्य वासुदेवं स्युः सदानन्दैकभोगिनः ॥ ६८ ॥

सकृदुच्चरितं यैस्तु कृष्णेति न विशन्ति ते ।
गर्भागारगृहं मातुर्यमलोकं च दुस्सहम् ॥ ६९ ॥

क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ।
क्व जपो वासुदेवेति मुक्तिवीजमनुत्तमम् ॥ ७० ॥

वुद्ध्या वुद्ध्वाऽभ्यसेदेतत् हरिरित्यक्षरद्वयम् ।
स्मरणात्कीर्तनाद्यस्य न पुनर्जायते भुवि ॥ ७१ ॥

हे जिह्वे मम निःस्नेहे हरिं किं नानुभाषसे ।
हरिं वदस्व कल्याणि संसारोदधिनौर्हरिः ॥ ७२ ॥

असारे खलु संसारे सारात्सारतरो हरिः ।
पुण्यहीना न विन्दन्ति सारङ्गाश्च यथा जलम् ॥ ७३ ॥

कुरुक्षेत्रेण किं तस्य किं काश्या पुष्करेण किम् ।
जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम् ॥ ७४ ॥

ब्रह्मा

असारे खलु संसारे सारमेकं निरूपितम् ।
समस्तलोकनाथस्य सारमाराधनं हरेः ॥ ७५ ॥

सा जिह्वा या हरिं स्तौति तच्चित्तं यत्तदर्पणम् ।
तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ ७६ ॥

यस्तु विष्णुपरो नित्यं दृढभक्तिर्जितेन्द्रियः ।
स्वगृहेऽपि वसन् याति तद्विष्णोः परमं पदम् ॥ ७७ ॥

शङ्करः

साधु साधु महाभाग साधु दानवनाशन ।
यन्मां पृच्छसि धर्मज्ञ केशवाराधनं प्रति ॥ ७८ ॥

निमिषं निमिषार्धं वा मुहूर्तमपि भार्गव ।
नादग्धाशेषपापानां भक्तिर्भवति केशवे ॥ ७९ ॥

किं तेन मनसा कार्यं यत्र तिष्ठति केशवे ।
मनो मुक्तिफलावाप्तौ कारणं सुप्रयोजितम् ॥ ८० ॥

(रोगो नाम न सा जिह्वा यया न स्तूयते हरिः ।
गर्तौ नाम न तौ कर्णौ याभ्यां तत्कर्म न श्रुतम् ॥)
नूनं तत्कण्ठशालूकमथवाऽप्युपजिह्विका ।
रोगो नाम न सा जिह्वा या न वक्ति हरेर्गुणान् ॥ ८१ ॥

भारभूतैः करैः कार्यं किं तस्य नृपशोर्द्विजाः ।
यैर्हि न क्रियते विष्णोर्गृहसंमार्जनादिकम् ॥ ८२ ॥

चरणौ तौ तु सफलौ केशवालयगामिनौ ।
ते च नेत्रे महाभागे याभ्यां सन्दृश्यते हरिः ॥ ८३ ॥

किं तस्य चरणैः कार्यं वृथासञ्चरणैर्द्विजाः ।
यैर्हि न व्रजते जन्तुः केशवालयदर्शने ॥ ८४ ॥

वेदवेदान्तविदुषां मुनीनां भावितात्मनाम् ।
ऋषित्वमपि धर्मज्ञ विज्ञेयं तत्प्रसादजम् ॥ ८५ ॥

विचित्ररत्नपर्यङ्के महाभोगे च भोगिनः ।
रमन्ते नाकिरामाभिः केशवस्मरणात् फलम् ॥ ८६ ॥

अश्वमेधसहस्राणां यः सहस्रं समाचरेत् ।
नासौ तत्फलमाप्नोति तद्भक्तैर्यदवाप्यते ॥ ८७ ॥

रे रे मनुष्याः पुरुषोत्तमस्य
करौ न कस्मान्मुकुलीकुरुध्वम् ।
क्रियाजुषां को भवतां प्रयासः
फलं हि यत्तत्पदमच्युतस्य ॥ ८८ ॥

विष्णोर्विमानं यः कुर्यात्सकृद्भक्त्या प्रदक्षिणम् ।
अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥ ८९ ॥

प्रदक्षिणं तु यः कुर्याद्धरिं भक्तिसमन्वितः ।
हंसयुक्तविमानेन विष्णुलोकं स गच्छति ॥ ९० ॥

तीर्थकोटिसहस्राणि व्रतकोटिशतानि च ।
नारायणप्रणामस्य कलां नार्हन्ति षोडशीम् ॥ ९१ ॥

उरसा शिरसा दृष्ट्या मनसा वचसा तथा ।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ॥ ९२ ॥

शाठ्येनापि नमस्कारं कुर्वतः शार्ङ्गपाणये ।
शतजन्मार्जितं पापं नश्यत्येव न संशयः ॥ ९३ ॥

संसारार्णवमग्नानां नराणां पापकर्मणाम् ।
नान्योद्धर्ता जगन्नाथं मुक्त्वा नारायणं प्रभुम् ॥ ९४ ॥

रेणुकुण्ठितगात्रस्य कणा यावन्ति भारत ।
तावद्वर्षसहस्राणि विष्णुलोके महीयते ॥ ९५ ॥

पावनं विष्णुनैवेद्यं सुभोज्यमृषिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ॥ ९६ ॥

कोट्यैन्दवसहस्रैस्तु मासोपोषणकोटिभिः ।
तत्फलं लभ्यते पुम्भिर्विष्णोर्नैवेद्यभक्षणात् ॥ ९७ ॥

त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥ ९८ ॥

षण्मासफलदा गोदा वत्सरस्य तु जाह्नवी ।
विष्णुपादोदकस्यैताः कलां नार्हन्ति षोडशीम् ॥ ९९ ॥

गङ्गाप्रयागगयपुष्करनैमिषाणि
संसेवितानि बहुशः कुरुजाङ्गलानि ।
कालेन तीर्थसलिलानि पुनन्ति पापं
पादोदकं भगवतः प्रपुनाति सद्यः ॥ १०० ॥

यानि कानि च तीर्थानि ब्रह्माण्डान्तर्गतानि च ।
विष्णुपादोदकस्यैताः कलां नार्हन्ति षोडशीम् ॥ १०१ ॥

स्नात्वा पादोदकं विष्णोः पिबन् शिरसि धारयेत् ।
सर्वपापविनिर्मुक्तो वैष्णवीं सिद्धिमाप्नुयात् ॥ १०२ ॥

यथा पादोदकं पुण्यं निर्माल्यं चानुलेपनम् ।
नैवेद्यं धूपशेषश्च आरार्तिश्च तथा हरेः ॥ १०३ ॥

तुलस्यास्तु रजोजुष्टनैवेद्यस्य च भक्षणम् ।
निर्माल्यं शिरसा धार्यं महापातकनाशनम् ॥ १०४ ॥

भक्त्या वा यदि वाऽभक्त्या चक्राङ्कितशिलां प्रति ।
दर्शनं स्पर्शनं वाऽपि सर्वपापप्रणाशनम् ॥ १०५ ॥

(शालग्रामोद्भवो देवो देवो द्वारवतीभवः ।
उभयोः स्नानतोयेन ब्रह्महत्यां व्यपोहति ॥ १०६ ॥

शालग्रामशिला यत्र तत्र सन्निहितो हरिः ।
तत्र स्नानं च दानं च वाराणस्याः शताधिकम् ॥ १०७ ॥)

म्लेच्छदेशेऽशुचौ वाऽपि चक्राङ्को यत्र तिष्ठति ।
योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ॥ १०७ ॥

शालग्रामोद्भवो देवो शैलं चक्राङ्कमण्डलम् ।
यत्रापि नीयते तत्र वाराणस्याः शताधिकम् ॥ १०८ ॥

शालग्रामोद्भवो देवो देवो द्वारवतीभवः ।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥ १०९ ॥

हरिणा मुक्तिदानीह मुक्तिस्थानानि सर्वशः ।
स यस्य सर्वभावेषु तस्य तैः किं प्रयोजनम् ॥ ११० ॥

हरिर्याति हरिर्याति दस्युव्याजेन यो वदेत् ।
सोऽपि सद्गतिमाप्नोति गतिं सुकृतिनो यथा ॥ १११ ॥

वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।
त्यक्त्वाऽमृतं स मूढात्मा भुङ्क्ते हालाहलं विषम् ॥ ११२ ॥

त्यक्त्वाऽमृतं यथा कश्चिदन्यपानं पिबेन्नरः ।
तथा हरिं परित्यज्य योऽन्यं दैवमुपासते ॥ ११३ ॥

स्वधर्मं तु परित्यज्य परधर्मं चरेद्यथा ।
तथा हिरं परित्यज्य योऽन्यं दैवमुपासते ॥ ११४ ॥

गां च त्यक्त्वा स मूढात्मा गार्दभीं वन्दते यथा ।
तथा हरिं परित्यज्य चान्यं दैवमुपासते ॥ ११५ ॥

वासुदेवं परित्यज्य योऽन्यं दैवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥ ११६ ॥

यथा गङ्गोदकं त्यक्त्वा पिवेत् कूपोदकं नरः ।
तथा हरिं परित्यज्य योऽन्यं दैवमुपासते ॥ ११७ ॥

स्वमातरं परित्यज्य श्वपाकीं वन्दते यथा ।
तथा हरिं परित्यज्य योऽन्यं दैवमुपासते ॥ ११८ ॥

यावत्स्वस्थमिदं पिण्डं नीरुजं करणान्वितम् ।
तावत्कुरुष्वात्महितं पश्चात्तापेन तप्यसे ॥ ११९ ॥

यावत्स्वास्थ्यं शरीरेषु करणेषु च पाटवम् ।
तावदर्चय गोविन्दमायुष्यं सार्थकं कुरु ॥ १२० ॥

स्मर्यतां तु हृषीकेशो हृषीकेषु दृढेषु च ।
अदृढेषु हृषीकेषु हृषीकेशं स्मरन्ति के ॥ १२१ ॥

यावच्चिन्तयते जन्तुर्विषयान् विषसन्निभान् ।
तावच्चेत्स्मरते विष्णुं को न मुच्येत वन्धनात् ॥ १२२ ॥

यावत्प्रलपते जन्तुर्लोकवार्तादिभिः सदा ।
तावच्चेद्वदते विष्णुं को न मुच्येत बन्धनात् ॥ १२३ ॥

सूतः

ज्ञात्वा विप्रैस्तिथिं सम्यग् दैवज्ञैः समुदीरिताम् ।
कर्तव्य उपवासस्तु ह्यन्यथा नरकं व्रजेत् ॥ १२४ ॥

क्षये वाऽप्यथवा वृद्धौ सम्प्राप्ते वा दिनक्षये ।
उपोष्या द्वादशी पुण्या पूर्वविद्धां परित्यजेत् ॥ १२५ ॥

पूर्वविद्धां प्रकुर्वाणो नरो धर्मान् निकृन्तति ।
सन्ततेस्तु विनाशाय सम्पदो हरणाय च ॥ १२६ ॥

कलावेधे तु विप्रेन्द्र दशाम्यैकादशीं त्यजेत् ।
सुराया बिन्दुना स्पृष्टं गङ्गाम्भ इव सन्त्यजेत् ॥ १२७ ॥

श्वदृतौ पञ्चगव्यं च दशम्या दूषितां त्यजेत् ।
एकादशीं द्विजश्रेष्ठाः पक्षयोरुभयोरपि ॥ १२८ ॥

तस्माद्विप्रा न विद्धा हि कर्तव्यैकादशी क्वचित् ।
विद्धा हन्ति पुरापुण्यं श्राद्धं च वृषलीपतिः ॥ १२९ ॥

जप्तं दत्तं हुतं स्नातं तथा पूजा कृता हरेः ।
तत्सर्वं विलयं याति तमः सूर्योदये यथा ॥ १३० ॥

एकादश्यां यदा ब्रह्मन् दिनक्षयतिथिर्भवेत् ।
उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम् ॥ १३१ ॥

प्रतिपत्प्रभृतयः सर्वा उदयादुदयाद्रवेः ।
सम्पूर्णा इति विज्ञेया हरिवासरवर्जिताः ॥ १३२ ॥

अरुणोदयकाले तु दशमी यदि दृश्यते ।
न तत्रैकादशी कार्या धर्मकामार्थनाशिनी ॥ १३३ ॥

अरुणोदयवेलायां दशमी यदि दृश्यते ।
पापमूलं तदा ज्ञेयमेकादश्युपवासनम् ॥ १३४ ॥

चतस्रो घटिकाः प्रातररुणोदय उच्यते ।
यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशं जलम् ॥ १३५ ॥

उदयात्प्राग्यदा विप्रा मुहूर्तद्वयसंयुता ।
सम्पूर्णैकादशी नाम तत्रैवोपवसेद्गृही ॥ १३६ ॥

उदयात्प्राक्त्रिघटिकाव्यापिन्यैकादशी यदा ।
सन्दिग्धैकादशी नाम वर्ज्या धर्मार्थकाङ्क्षिभिः ॥ १३७ ॥

पुत्रपौत्रविवृध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥ १३८ ॥

उदयात्प्राग् द्विघटिकाव्यापिन्यैकादशी यदा ।
सङ्कीर्णैकादशी नाम वर्ज्या धर्मार्थकाङ्क्षिभिः ॥ १३९ ॥

पुत्रराज्यविवृद्ध्यर्थं द्वादश्यामुपवासनम् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥ १४० ॥

दशमीशेषसंयुक्ता गान्धार्या समुपोपिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥ १४१ ॥

अपीषद्दशमीविद्धा त(स)दा तां परिवर्जयेत् ।
सुराबिन्दुसमायुक्तां प्रवदन्ति मनीषिणः ॥ १४२ ॥

बह्वागमविरोधेषु ब्राह्मणेषु विवादिषु ।
उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम् ॥ १४३ ॥

एकादश्यां तु विद्धायां सम्प्राप्ते श्रवणे तथा ।
उपोष्या द्वादशी पुण्या पक्षयोरुभयोरपि ॥ १४४ ॥

उपरागसहस्राणि व्यतीपातायुतानि च ।
अमालक्षं तु द्वादश्याः कलां नार्हन्ति षोडशीम् ॥ १४५ ॥

शुद्धाऽपि द्वादशी ग्राह्या परतो द्वादशी यदि ।
विषं तु दशमी ज्ञेयाऽमृतं चैकादशी तिथिः ।
विषप्रधाना वर्ज्या साऽमृता ग्राह्या प्रयत्नतः ॥ १४६ ॥

द्वादश्यां भोजनं चैव विद्धायां ह्युपोषणम् ।
यः कुर्यान्मन्दबुद्धित्वान्निरयं सोऽधिगच्छति ॥ १४७ ॥

यानि कानि च वाक्यानि विद्धोपोषपराणि च ।
धनदार्चापराणि स्युर्वैष्णवी न दशायुता ॥ १४८ ॥

अथवा मोहनार्थाय मोहिन्या भगवान् हरिः ।
अर्थितः कारयामास व्यासरूपी जनार्दनः ॥ १४९ ॥

धनदार्चाविवृध्यर्थं महावित्तलयस्य च ।
असुराणां मोहनार्थं पाषण्डानां विवृद्धये ।
आत्मस्वरूपाविज्ञस्यै स्वलोकाप्राप्तये तथा ॥ १५० ॥

एवं विद्धां परित्यज्य द्वादश्यामुपवासयेत् ।
कोटिजन्मार्जितं पापमेकयैव विनश्यति ॥ १५१ ॥

ततः कोटिगुणं चापि निषिद्धस्येतरैर्जनैः ।
यदनादिकृतं पापं यदूर्ध्वं यत्करिष्यति ॥ १५२ ॥

तत्सर्वं विलयं याति परेषामुपवासनात् ।
न च तस्मात्प्रियतमः केशवस्य ममापि च ॥ १५३ ॥

एकादश्यां ह्यवेधे तु द्वादशीं न परित्यजेत् ।
पारणे मरणे चैव तिथिस्तात्कालिकी स्मृता ॥ १५४ ॥

ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो भर्तृमती तथा ॥ १५५ ॥

अभर्तृका तथाऽन्ये च सूतवैदेहिकादयः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥ १५६ ॥

एकादश्यां तु यो भुङ्क्ते मोहेनावृतचेतसा ।
शुक्लायामथ कृष्णायां निरयं याति स ध्रुवम् ॥ १५७ ॥

विवेचयति यो मोहाच्छुक्ला कृष्णेति पापकृत् ।
एकादशीं स वै याति निरयं नात्र संशयः ॥ १५८ ॥

यथा गौर्नैव हन्तव्या शुक्ला कृष्णेति भामिनि ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥ १५९ ॥

यानि कानि च वाक्यानि कृष्णैकादशिवर्जने ।
भरण्यादिनिषेधे च तानि काम्यफलार्थिनाम् ॥ १६० ॥

कामिनोऽपि हि सिद्ध्यर्थं कुर्युरेवोपवासनम् ।
प्रीणनाय हरेर्नित्यं न तु काम्यव्यपेक्षया ॥ १६१ ॥

तस्माच्छुक्लामथो कृष्णां भरण्यादियुतामपि ।
प्रत्यवायनिषेधार्थमुपवासीत नित्यशः ।
प्रीणनार्थं हरेश्चापि विष्णुलोकस्य चाप्तये ॥ १६२ ॥

कला वाऽर्धकला वाऽपि परतो द्वादशी यदि ।
द्वादश द्वादशीर्हन्ति पूर्वेद्युः पारणे कृते ॥ १६३ ॥

अतिरिक्ता द्वादशी चेद्यस्तां नोपोषयेद्यदि ।
द्वादश द्वादशीर्हन्ति द्वादशी चातिलङ्घिता ॥ १६४ ॥

द्वादश्यामतिरिक्तायां यो भुङ्क्ते पूर्ववासरे ।
द्वादश द्वादशीर्हन्ति द्वादर्शी न परित्यजेत् ॥ १६५ ॥

द्वादशीं श्रवणोपेतां यो नोपोष्यात् सुमन्दधीः ।
पञ्चसंवत्सरकृतं पुण्यं तस्य विनश्यति ॥ १६६ ॥

एकादशीमुपोष्याथ द्वादशीमप्युपोषयेत् ।
न तत्र विधिलोपः स्यादुभयोर्देवता हरिः ॥ १६७ ॥

अल्पायामपि विप्रेन्द्र पारणं तु कथं भवेत् ।
पारयित्वोदकेनापि भुञ्जानो नैव दुष्यति ॥ १६८ ॥

यदाल्पां द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव तु ।
आमध्याह्नाः क्रियाः सर्वाः कर्तव्याः शम्भुशासनात् ॥ १६९

व्यासः

उषसि द्वे तु कर्तव्ये प्रातर्माध्याह्निकक्रिये ।
भुजेर्यदाऽपकर्षस्य तदन्तर्न्यायतो भवेत् ॥ १७० ॥

कर्तुं साध्यं यदा नालं द्वादश्यद्भिस्तु पारयेत् ।
क्रतावल्पाशिवत् पश्चात् भुञ्जीतेत्यपरे जगुः ॥ १७१ ॥

अशितानशिता यस्मादापो विद्वद्भिरीरिताः ।
अम्भसा केवलेनैव करिष्ये व्रतपारणम् ॥ १७२ ॥

न काशी न गया गङ्गा न रेवा न च पुष्करम् ।
न चापि कौरवं क्षेत्रं तुल्यं भूप हरेर्दिनात् ॥ १७३ ॥

अश्वमेधसहस्राणि वाजपेयायुतानि च ।
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥ १७४ ॥

एकादशीसमुत्थेन वह्निना पातकेन्धनम् ।
भस्मीभवति राजेन्द्र अपि जन्मशतोद्भवम् ॥ १७५ ॥

नेदृशं पावनं किञ्चिन्नराणां भुवि विद्यते ।
यादृशं पद्मनाभस्य दिनं पातकहानिदम् ॥ १७६ ॥

तावत्पापानि देहेऽस्मिन् तिष्ठन्ति मनुजाधिप ।
यावन्नोपोपयेज्जन्तुः पद्मनाभदिनं शुभम् ॥ १७७ ॥

एकादशेन्द्रियैः पापं यत्कृतं भवति प्रभो ।
एकादश्युपावासेन तत्सर्वं विलयं व्रजेत् ॥ १७८ ॥

एकादशीसमं किञ्चित् पवित्रं न हि विद्यते ।
व्याजेनापि कृता राजन्न दर्शयति भास्करिम् ॥ १७९ ॥

श्रीव्यासः

अन्नं निवेदयेन्मह्यं प्राप्तं मद्वासरे शुभे ।
तस्यापि नरकप्राप्तिः किं पुनर्भोजने कृते ॥

स ब्रह्महा स गोघ्नश्च स स्तेनो गुरुतल्पगः ।
एकादश्यां तु भुञ्जानः पक्षयोरुभयोरपि ॥ १८० ॥

वरं स्वमातृगमनं वरं गोमांसभक्षणम् ।
वरं हत्या सुरापानमेकाश्यन्नभक्षणात् ॥ १८१ ॥

एकादशीदिने पुण्ये भुञ्जते ये नराधमाः ।
अवलोक्य मुखं तेषामादित्यमवलोकयेत् ॥ १८२ ॥

पृथिव्यां यानि पापानि ब्रह्महत्यादिकानि च ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ॥ १८३ ॥

रुग्माङ्गदः

अष्टवर्षाधिको यस्तु ह्यशीतिर्न हि पूर्यते ।
यो भुङ्क्ते मानवः पापी विष्णोरहनि चागते ॥ १८४ ॥

पिता वा यदि वा पुत्रो भार्या वाऽपि सुहृज्जनः ।
पद्मनाभदिने भुङ्क्ते निग्राह्यो दस्युवद्भवेत् ॥ १८५ ॥

ब्रह्मा

उपोष्य द्वादशीं पुण्यां सर्वपापक्षयप्रदाम् ।
न पश्यन्ति यमं वाऽपि नरकाणि न यातनाम् ॥ १८६ ॥

शङ्करः

रटन्तीह पुराणानि भूयो भूयो वरानने ।
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ॥ १८७ ॥

द्वादशी न प्रमोक्तव्या यावदायुः प्रवर्तते ।
अर्चनीयो हृषीकेशो विशुद्धेनान्तरात्मना ॥ १८८ ॥

भक्त्या ग्राह्यो हृषीकेशो न धनैर्धरणीसुराः ।
भक्त्या सम्पूजितो विष्णुः फलं धत्ते समीहितम् ॥ १८९ ॥

जलेनापि जगन्नाथः पूजितः क्लेशनाशनः ।
परितोषं प्रयात्याशु तृषार्तास्तु यथा जलैः ॥ १९० ॥

आसीनस्य शयानस्य तिष्ठतो व्रजतोऽपि वा ।
रमस्व पुण्डरीकाक्ष हृदये मम सर्वदा ॥ १९१ ॥

सर्वगश्चैव सर्वात्मा सर्वावस्थासु चाच्युत ।
रमस्व पुण्डरीकाक्ष नृसिंह हृदये मम ॥ १९२ ॥

करावलम्बनं देहि श्रीकृष्ण कमलेक्षण ।
भवपङ्कार्णवे घोरे मज्जतो मम शाश्वत (सर्वदा) ॥ १९३ ॥

(एकादश्यां न भुञ्जीत न सुरां वा पिबेत्क्वचित् ।
ब्राह्मणो नैव हन्तव्य इत्येषा वैदिकी स्मृतिः ॥)

त्राहि त्राहि जगन्नाथ वासुदेवाच्युताव्यय ।
मां समुद्धर गोविन्द दुःखसंसारसागरात् ॥ १९४ ॥

एतत्पुण्यं परं गुह्यं पवित्रं पापनाशनम् ।
आयुष्यं च यशस्यं च धन्यं दुःस्वप्ननाशनम् ॥ १९५ ॥

कलौ पापं कियन्मात्रं हत्यास्तेयादिसम्भवम् ।
स्मृते मनसि गोविन्दे दह्यते तूलराशिवत् ॥ १९६ ॥

कलौ केशवभक्तानां न भयं विद्यते क्वचित् ।
स्मृते सङ्कीर्तिते ध्याते सङ्क्षयं याति पातकम् ॥ १९७ ॥

अध्येतव्यमिदं शास्त्रं श्रोतव्यमनसूयया ।
भक्तेभ्यश्च प्रदातव्यं धार्मिकेभ्यः पुनःपुनः ॥ १९८ ॥

अधीयाना इदं शास्त्रं विष्णोर्माहात्म्यमुत्तमम् ।
सर्वपापविनिर्मुक्ताः प्राप्नुवन्ति परं पदम् ॥ १९९ ॥

श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम् ।
श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षं च गच्छति ॥ २०० ॥

तस्मादिदं सदा सेव्यं श्रोतव्यं च सदैव हि ।
कुतर्कदावदग्धेभ्यो न दातव्यं कथञ्चन ॥ २०१ ॥

संसारविषपानेन ये मृताः प्राणिनो भुवि ।
अमृताय स्मृतस्तेषां कृष्णामृतमहार्णवः ॥ २०२ ॥

क्लिन्नं पादोदकेनैव यस्य नित्यं कलेवरम् ।
तीर्थकोटिसहस्रैस्तु स्नातो भवति प्रत्यहम् ॥ २०३ ॥

तीर्थकोटिसहस्रैस्तु सेवितैः किं प्रयोजनम् ।
तोयं यदि पिबेन्नित्यं शालग्रामशिलाच्युतम् ॥ २०४ ॥

शालग्रामशिलास्पर्शं ये कुर्वन्ति दिनेदिने ।
वाञ्छन्ति करसंस्पर्शं तेषां देवाः सवासवाः ॥ २०५ ॥

दुःसहो नारको वह्निर्दुःसहा यमकिङ्कराः ।
विषमश्चान्तकपथः प्रेतत्वं चातिदारुणम् ॥ २०६ ॥

सञ्चिन्त्य मनसाऽप्येवं पातकाद्विनिवर्तयेत् ।
स्मरणं कीर्तनं विष्णोः सदैव न परित्यजेत् ॥ २०७ ॥

अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ २०८ ॥

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात् परम् ॥ २०९ ॥

सकृदुच्चारितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ २१० ॥

एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
कीर्तयन्ति सुरश्रेष्ठं देवं नारायणं प्रभुम् ॥ २११ ॥

किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ।
यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥ २१२ ॥

नित्योत्सवो भवेत्तेषां नित्यश्रीर्नित्यमङ्गलम् ।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ॥ २१३ ॥

जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ।
स्त्री वाऽप्यनूनदशकं देहं मानुषमार्जयेत् ॥ २१४ ॥

चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः ।
अतोऽवित्त्वा परं देवं मोक्षाशा का महामुने ॥ २१५ ॥

आचतुर्दशमाद्वर्षात् कर्माणि नियमेन तु ।
दशावराणां देहानां कारणानि करोत्ययम् ।
अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति ॥ २१६ ॥

समानां विषमा पूजा विषमाणां समा तथा ।
क्रियते येन देवोऽपि स्वपदाद्भ्रश्यते हि सः ॥ (इति पाद्मे)

वित्तं बन्धुर्वयः कर्म विद्या चैव तु पञ्चमी ।
एतानि मान्यस्थानानि गरीयो ह्युत्तरोत्तरम् ॥ २१८ ॥

गुणानुसारिणीं पूजां समां दृष्टिं च यो नरः ।
सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति ॥ २१९ ॥

यथा सुहृत्सु कर्तव्यं पितृमातृसुतेषु च ।
तथा करोति पूजादि समबुद्धिः स उच्यते ॥ २२० ॥

तिर्यक्पुण्ड्रं न कुर्वीत सम्प्राप्ते मरणेऽपि वा ।
न चान्यन्नाम विब्रूयात् परान्नारायणादृते ॥ २२१ ॥

नैवेद्यशेषं देवस्य यो भुनक्ति दिने दिने ।
सिक्थे सिक्थे भवेत्पुण्यं चान्द्रायणशताधिकम् ॥ २२२ ॥

ऊर्ध्वपुण्ड्रमृजुं सौम्यं ललाटे यस्य दृश्यते ।
स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः ॥ २२३ ॥

अशुचिर्वाऽप्यनाचारो मनसा पापमाचरन् ।
शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्राङ्कितो नरः ॥ २२४ ॥

ऊर्ध्वपुण्ड्रविहीनस्य श्मशानसदृशं मुखम् ।
अवलोक्य मुखं तेषामादित्यमवलोकयेत् ॥ २२५ ॥

यज्ञो दानं तपश्चैव स्वाध्यायः पितृतर्पणम् ।
व्यर्थं भवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ॥ २२६ ॥

गोपीचन्दनलिप्ताङ्गो यं यं पश्यति चक्षुषा ।
तं तं शुद्धं विजानीयान्नात्र कार्या विचारणा ॥ २२७ ॥

आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ।
वैष्णवोऽस्मत्कुले जातः स नः सन्तारयिष्यति ॥ २२८ ॥

जीवितं विष्णुभक्तस्य वरं पञ्चदिनान्यपि ।
न तु कल्पसहस्रैस्तु भक्तिहीनस्य केशवे ॥ २२९ ॥

किं तेन जातमात्रेण भूभारेणान्नशत्रुणा ।
यो जातो नार्चयेद्विष्णुं न स्मरेन्नापि कीर्तयेत् ॥ २३० ॥

यो ददाति द्विजातिभ्यश्चन्दनं गोपिमर्दितम् ।
अपि सर्षपमात्रेण पुनात्यासप्तमं कुलम् ॥ २३१ ॥

ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत ॥ २३२

अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।
एतादृशोऽपि नाचारं श्रौतं स्मार्तं परित्यजेत् ॥ २३३ ॥

'यदेव विद्यया करोति श्रद्धयोपनिषदा
तदेव वीर्यवत्तरं भवति' ॥ २३४ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' ॥ २३५ ॥

आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ।
वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥ २३६ ॥

निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ॥ २३७ ॥

श्रीमदानन्दतीर्थार्यसहस्रकिरणोत्थिता ।
गोततिः सततं सेव्या गीर्वाणैः सिद्धिदा भवेत् ॥ २३८ ॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ २३९ ॥

यः सर्वगुणसम्पूर्णः सर्वदोषविवर्जितः ।
प्रीयतां प्रीत एवालं विष्णुर्मे परमः सुहृत् ॥ २४० ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः
श्रीकृष्णामृतमहार्णवः समाप्तः ॥



## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# जयन्तीनिर्णयः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

रोहिण्यामर्धरात्रे तु यदा कालाष्टमी भवेत् ।
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशनी ॥ १ ॥

यस्यां जातो हरिः साक्षान्निशीथे भगवानजः ।
तस्मात्तद्दिनमत्यन्तं पुण्यं पापहरं परम् ॥ २ ॥

तस्मात् सर्वैरुपोष्या सा जयन्ती नाम वै सदा ।
द्विजातिभिर्विशेषेण तद्भक्तैश्च विशेषतः ॥ ३ ॥

यो भुङ्क्ते तद्दिने मोहात्पूयशोणितमत्ति सः ।
तस्मादुपवसेत् पुण्यं तद्दिनं श्रद्धयाऽन्वितः ॥ ४ ॥

कृत्वा शौचं यथान्यायं स्नानं कुर्यादतन्द्रितः ।
प्रभातकाले मेधावी योगायेति यथाविधि ॥ ५ ॥

नित्याह्निकं प्रकुर्वीत भगवन्तमनुस्मरन् ।
योगाय योगपतये योगेश्वराय
योगसम्भवाय श्रीगोविन्दाय नमो नमः ॥ ६ ॥

मध्याह्नकाले च पुमान् सायङ्काले त्वतन्द्रितः ।
स्नायीत पूर्वमन्त्रेण वासुदेवमनुस्मरन् ॥ ७ ॥

ततः पूजां प्रकुर्वीत विधिवत्सुसमाहितः ।
यज्ञायेति च मन्त्रेण श्रद्धाभक्तियुतः पुमान् ॥ ८ ॥

कृष्णं च बलभद्रं च वसुदेवं च देवकीम् ।
नन्दगोपं यशोदां च सुभद्रां तत्र पूजयेत् ।
अर्घ्यं दत्वा समभ्यर्च्याभ्युदिते शशिमण्डले ॥ ९ ॥

जातः कंसवधार्थाय भूभारोत्तारणाय च ।
कौरवाणां विनाशाय दैत्यानां निधनाय च ॥ १० ॥

पाण्डवानां हितार्थाय धर्मसंस्थापनाय च ।
गृहणार्घ्यं मया दत्तं देवक्या सहितो हरे ॥ ११ ॥

क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव ।
गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन् ॥ १२ ॥

दत्वाऽर्घ्यं मनुनाऽनेन ह्युपस्थाय विधुं बुधः ।
शशिने चन्द्रदेवाय सोमदेवाय चेन्दवे ॥ १३ ॥

मृगिणे सितबिम्बाय लोकदीपाय दीपिने ।
शीतदीधितिबिम्बाय तारकापतये नमः ॥ १४ ॥

उपसंहृत्य तत्सर्वं ब्रह्मचारी जितेन्द्रियः ।
विश्वायेति च मन्त्रेण ततः स्वापं समाचरेत् ॥ १५ ॥

ततो नित्याह्निकं कृत्वा शक्तितो दीयतां धनम् ।
सर्वायेति च मन्त्रेण ततः पारणमाचरेत् ।
धर्मायेति ततः स्वस्थो मुच्यते सर्वकिल्बिषैः ॥ १७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितो जयन्तीनिर्णयः समाप्तः ॥

★★★

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# यतिप्रणवकल्पः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

समिच्चर्वाज्यकान्हुत्वा सम्यक्पुरुषसूक्ततः ।
सर्वेषामभयं दत्वा विरक्तः प्रव्रजेद्धरिम् ॥ १ ॥

श्रुत्वा भागवतं शुद्धमाचार्यं शरणं व्रजेत् ।
अधीहि भगवो ब्रह्मेत्यस्मै ब्रूयाद्गुरुः परम् ॥ २ ॥

उच्चारयेत्त्रिशस्तारं दक्षिणे श्रवणे तथा ।
ऋषिच्छन्दोदैवतानि ब्रूयात्तस्य क्रमात्सुधीः ॥ ३ ॥

अन्तर्यामीति गायत्री परमात्मेत्यनुक्रमात् ।
विश्वश्च तैजसः प्राज्ञस्तुर्यश्चाक्षरदेवताः ॥ ४ ॥

कृष्णो रामो नृसिंहश्च वराहो विष्णुरेव च ।
परञ्ज्योतिः परं ब्रह्म वासुदेव इति क्रमात् ॥ ५ ॥

अकारादेस्तथा शान्तातिशान्तान्तस्य देवताः ।
एवमुक्त्वा तु तद्ध्यानं ब्रूयाच्छिष्याय सद्गुरुः ॥ ६ ॥

अष्टपत्रे तु हृत्पद्मे मध्ये सूर्येन्दुवह्निगम् ।
पीठं तत्पद्ममध्यस्थं नारायणमनामयम् ॥ ७ ॥

उद्यदादित्यसङ्काशं तेजसाऽनुपमं सदा ।
सहस्रेणापि सूर्याणां सञ्ज्ञानानन्दरूपिणम् ॥ ८ ॥

अतिरक्ततलं भास्वन्नखव्रातविभूषितम्
वृत्तजङ्घं वृत्तजानुं हस्तिहस्तोरुमीश्वरम् ॥ ९ ॥

महाकटितटावद्धकाञ्चीपीताम्वरोज्ज्वलम् ।
सुनिम्ननाभिं त्रिवलिं सुवृत्तोदरवन्धनम् ॥ १० ॥

विशालवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ।
वनमालाधरं हारवैजयन्त्यादिभिर्युतम् ॥ ११ ॥

पृथुदीर्घचतुर्वाहुं शङ्खचक्रगदाम्वुजैः ।
युक्तमुन्निद्रपद्माक्षं स्फुरन्मकरकुण्डलम् ॥ १२ ॥

पूर्णचन्द्रायुतोद्रिक्तकान्तिमन्मुखपङ्कजम् ।
सुभ्रुवं सुललाटान्तं किरीटावद्धमूर्धजम् ॥ १३ ॥

निःशेषदुःखदमनं नित्यानन्दशुचिस्मितम् ।
विश्वादींश्चैव कृष्णादीनेवम्भूतान्सनातनान् ॥ १४ ॥

अभिन्नानेव सततं तस्माद्विष्णोः परात्मनः ।
वराभयोद्यतकरान्नित्यानन्दैकरूपिणः ॥ १५ ॥

एवमुक्त्वा गुरुर्ध्यानं शपथं कारयेत्ततः ।
न विष्णुं वैष्णवांश्चैव विसृजेयमिति त्रिशः ॥ १६ ॥

न चान्यदेवतासाम्यं तदैक्यमथवा हरेः ।
चिन्तयेयं मृतो वाऽपि न चाप्येकत्ववादिभिः ॥ १७ ॥

समत्ववादिभिर्वाऽहं सङ्गच्छेयं कदाचन ।
तन्निन्दकैश्च तद्भक्तनिन्दकैर्वा महामुने ॥ १८ ॥

एवं कृते तु शपथे मस्तके हस्तपङ्कजम् ।
निधायोत्तीर्य संसारात्सुखी भव हरेः प्रियः ॥ १९ ॥

सर्वदुःखादिभिर्मुक्तो नित्यानन्दैकरूपकः ।
सम्प्राप्य विष्णुसामीप्यं तत्रापि हरिभक्तिमान् ॥ २० ॥

भक्तिमांश्चान्यदेवेषु तारतम्यं च संस्मरन् ।
सर्वोत्कर्षं स्मरन्विष्णोर्भूयाश्चैव सदा सुखी ॥ २१ ॥

न मुक्तौ विष्णुनैक्यं वा मुक्तानां साम्यमेव वा ।
स्मरेथा इति चोक्त्वाऽथ समयाननुशिक्षयेत् ॥ २२ ॥

नित्यशश्च हरेः पूजा जपध्यानसमर्पणम् ।
कर्तव्यं तु त्वया वत्स जपश्च त्रिसहस्रकः ॥ २३ ॥

मध्यमः प्रणवस्योक्तो योऽवरः स सहस्रकः ।
त्रिसहस्रात्परो यस्तु स उत्तमजपः स्मृतः ॥ २४ ॥

आत्मानं प्रतिबिम्बत्वे ध्यायन् बिम्बं जनार्दनम् ।
ध्यायस्व सततं वत्स सपर्यां नित्यशः कुरु ॥ २५ ॥

मानसैर्वाथ पुष्पैर्वा प्रणवेन समाहितः ।
अन्यांश्च वैष्णवान्मन्त्राञ्जपेथा भक्तिपूर्वकम् ॥ २६ ॥

शृणुष्व वैष्णवं शास्त्रं सदा वेदार्थतत्परः ।
वेदान्मन्त्रानुपनिषत्सहितान्सर्वदा शृणु ॥ २७ ॥

इतिहासपुराणं च पञ्चरात्रं तथैव च ।
तदर्थान् ब्रह्मसूत्रैश्च सम्यङ्निर्णीय तत्त्वतः ।
विष्णोः सर्वोत्तमत्वं च सर्वदा प्रतिपादय ॥ २८ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः यतिप्रणवकल्पः समाप्तः ॥

★★★

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# तन्त्रसारसङ्ग्रहः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

## प्रथमोऽध्यायः

जयत्यब्जभवेशेन्द्रवन्दितः कमलापतिः ।
अनन्तविभवानन्दशक्तिज्ञानादिसद्गुणः ॥ १ ॥

विधिं विधाय सर्गादौ तेन पृष्टोऽब्जलोचनः ।
आह देवो रमोत्सङ्गविलसत्पादपल्लवः ॥ २ ॥

अहमेकोऽखिलगुणो वाचकः प्रणवो मम ।
अकाराद्यतिशान्तान्तः सोऽयमष्टाक्षरो मतः ॥ ३ ॥

स विश्वतैजसप्राज्ञतुरीयात्मान्तरात्मनाम् ।
परमात्मज्ञानात्मयुजां मद्रूपाणां च वाचकः ॥ ४ ॥

तद्रूपभेदाः पञ्चाशन्मूर्तयो मम चापराः ।
पञ्चाशद्वर्णवाच्यास्ता वर्णास्तारार्णभेदिताः ॥ ५ ॥

द्विरष्टपञ्चकचतुःपञ्चेत्येवाष्टवर्गगाः ।
अज आनन्द इन्द्रेशावुग्र ऊर्ज ऋतम्भरः ॥ ६ ॥

ॠघलृशौ लॄजिरैकात्मैर ओजोभृदौरसः ।
अन्तोऽर्धगर्भः कपिलः खपतिर्गरुडासनः ॥ ७ ॥

घर्मो ङसारश्चार्वङ्गश्छन्दोगम्यो जनार्दनः ।
झाटितारिर्ञमष्टङ्की ठलको डरको ढरी ॥ ८ ॥

णात्मा तारस्थपो दण्डी धन्वी नम्यः परः फली ।
बली भगो मनुर्यज्ञो रामो लक्ष्मीपतिर्वरः ॥ ९ ॥

शान्तसंवित् षड्गुणश्च सारात्मा हंसळाळुकौ ।
पञ्चाशन्मूर्तयस्त्वेता ममाकारादिलक्षकाः ॥ १० ॥

नारायणाष्टाक्षरश्च ताराष्टाक्षरभेदवान् ।
आद्यैस्तारचतुवर्णैर्भिन्ना व्याहृतयः क्रमात् ॥ ११ ॥

अनिरुद्धादिकास्तासां देवता व्युत्क्रमेण वा ।
ताश्च तन्मूर्तयस्त्वेव द्वादशार्णपदोदिताः ॥ १२ ॥

नारायणाष्टाक्षराच्च व्याहृतिभ्यस्तथैव च ।
विभेदो द्वादशार्णानां केशवाद्याश्च देवताः ॥ १३ ॥

नारायणाष्टाक्षराच्च व्याहृतित्रिगुणात्पुनः ।
वेदमाता तु गायत्री द्विगुणा द्वादशाक्षरात् ॥ १४ ॥

चतुर्विंशन्मूर्तयोऽस्याः कथिता वर्णदेवताः ।
तद्भेदः पौरुषं सूक्तं वेदाः पुरुषसूक्तगाः ॥ १५ ॥

वैदिकास्सर्वशब्दाश्च तस्मात् सर्वाभिधोऽस्म्यहम् ।
पञ्चाशद्वर्णभिन्नाश्च सर्वशब्दा अतोऽपि च ॥ १६ ॥

ऋषिश्च देवतैकोऽहं तारादीनां विशेषतः ।
छन्दो मदीया गायत्री ताराष्टाक्षरयोर्मता ॥ १७ ॥

उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान् ।
चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ॥ १८ ॥

लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ॥ १९ ॥

सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् ।
मूर्तयोऽष्टावपि ध्येयाश्चक्रशङ्खवराभयैः ।
युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः ॥ २० ॥

तादृग्रूपाश्च पश्चाशज्ज्ञानमुद्राभयोद्यताः ।
टङ्की दण्डी च धन्वी च तत्तद्युक्तास्तु वामतः ॥ २१ ॥

वासुदेवादिकाः शुक्लरक्तपीतासितोज्ज्वलाः ।
शङ्खचक्रगदाब्जेतः प्रथमो मुसली हली ॥ २२ ॥

सशङ्खचक्रस्त्वपरस्तृतीयः शार्ङ्गवाणवान् ।
सशङ्खचक्रस्तुर्यस्तु चक्रशङ्खासिचर्मवान् ॥ २३ ॥

केशवो मधुसूदनः सङ्कर्षणदामोदरौ ।
सवासुदेवप्रद्युम्ना दक्षोच्चकरशङ्खिनः ॥ २४ ॥

विष्णुमाधवानिरुद्धपुरुषोत्तमाधोक्षजाः ।
जनार्दनश्च वामोच्चकरस्थितदरा मताः ॥ २५ ॥

गोविन्दश्च त्रिविक्रमस्सश्रीधरहृषीकपाः ।
नृसिंहश्चाच्युतश्चैव वामाधःकरशङ्खिनः ॥ २६ ॥

वामनः सनारायणः पद्मनाभ उपेन्द्रकः ।
हरिः कृष्णश्च दक्षाधःकरे शङ्खधरा मताः ॥ २७ ॥

णात्मा तारस्थपो दण्डी धन्वी नम्यः परः फली ।
वली भगो मनुर्यज्ञो रामो लक्ष्मीपतिर्वरः ॥ ९ ॥

शान्तसंवित् षड्गुणश्च सारात्मा हंसळाळुकौ ।
पञ्चाशन्मूर्तयस्त्वेता ममाकारादिलक्षकाः ॥ १० ॥

नारायणाष्टाक्षरश्च ताराष्टाक्षरभेदवान् ।
आद्यैस्तारचतुर्वर्णैर्भिन्ना व्याहृतयः क्रमात् ॥ ११ ॥

अनिरुद्धादिकास्तासां देवता व्युत्क्रमेण वा ।
ताश्च तन्मूर्तयस्त्वेव द्वादशार्णपदोदिताः ॥ १२ ॥

नारायणाष्टाक्षराच्च व्याहृतिभ्यस्तथैव च ।
विभेदो द्वादशार्णानां केशवाद्याश्च देवताः ॥ १३ ॥

नारायणाष्टाक्षराच्च व्याहृतित्रिगुणात्पुनः ।
वेदमाता तु गायत्री द्विगुणा द्वादशाक्षरात् ॥ १४ ॥

चतुर्विंशन्मूर्तयोऽस्याः कथिता वर्णदेवताः ।
तद्वेदः पौरुषं सूक्तं वेदाः पुरुषसूक्तगाः ॥ १५ ॥

वैदिकास्सर्वशब्दाश्च तस्मात् सर्वाभिधोऽस्म्यहम् ।
पञ्चाशद्वर्णभिन्नाश्च सर्वशब्दा अतोऽपि च ॥ १६ ॥

ऋपिश्च देवतैकोऽहं तारादीनां विशेषतः ।
छन्दो मदीया गायत्री ताराष्टाक्षरयोर्मता ॥ १७ ॥

उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान् ।
चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ॥ १८ ॥

लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ॥ १९ ॥

सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् ।
मूर्तयोऽष्टावपि ध्येयाश्चक्रशङ्खवराभयैः ।
युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः ॥ २० ॥

तादृग्रूपाश्च पश्चाशज्ज्ञानमुद्राभयोद्यताः ।
टङ्की दण्डी च धन्वी च तत्तद्युक्तास्तु वामतः ॥ २१ ॥

वासुदेवादिकाः शुक्लरक्तपीतासितोज्ज्वलाः ।
शङ्खचक्रगदाब्जेतः प्रथमो मुसली हली ॥ २२ ॥

सशङ्खचक्रस्त्वपरस्तृतीयः शार्ङ्गबाणवान् ।
सशङ्खचक्रस्तुर्यस्तु चक्रशङ्खासिचर्मवान् ॥ २३ ॥

केशवो मधुसूदनः सङ्कर्षणदामोदरौ ।
सवासुदेवप्रद्युम्ना दक्षोच्चकरशङ्खिनः ॥ २४ ॥

विष्णुमाधवानिरुद्धपुरुषोत्तमाधोक्षजाः ।
जनार्दनश्च वामोच्चकरस्थितदरा मताः ॥ २५ ॥

गोविन्दश्च त्रिविक्रमस्सश्रीधरहृषीकपाः ।
नृसिंहश्चाच्युतश्चैव वामाधःकरशङ्खिनः ॥ २६ ॥

वामनः सनारायणः पद्मनाभ उपेन्द्रकः ।
हरिः कृष्णश्च दक्षाधःकरे शङ्खधरा मताः ॥ २७ ॥

शङ्खचक्रगदापद्मधराश्चैते हि सर्वशः ।
क्रमव्युत्क्रमपद्मादिगदादिव्युत्क्रमस्तथा ।
अर्धक्रमः सान्तरश्च पट्सु पट्स्वरिपूर्विणाम् ॥ २८ ॥

वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।
व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ॥ २९ ॥

समासव्यासयोगेन व्याहृतीनां चतुष्टयम् ।
सत्यं चाङ्गानि तारस्य प्रोच्यन्तेऽष्टाक्षरस्य च ॥ ३० ॥

कृद्धमहावीरयुल्कसहस्रसहितोल्ककाः ।
चतुर्थ्यन्ता हृदादीनि पृथग्रूपाणि तानि च ॥ ३१ ॥

विष्णोरेवात्यभेदेऽपि तदैश्वर्यात्तदन्यवत् ।
चक्रशङ्खवराभीतिहस्तान्येतानि सर्वशः ॥ ३२ ॥

मूलरूपसवर्णानि कृष्णवर्णा शिखोच्यते ।
चतुर्विंशन्मूर्तयश्च मूलरूपसवर्णकाः ॥ ३३ ॥

आदिवर्णत्रयं नाभिहृच्छिरस्सु यथाक्रमम् ।
न्यसनीयं च तद्वर्णदेवताध्यानपूर्वकम् ॥ ३४ ॥

पञ्चानुनाभिहृदयवाङ्नासानेत्रकेषु च ।
अष्टाक्षराणां न्यासः स्यात् व्याहृतीनां प्रजापतिः ॥ ३५ ॥

मुनिश्छन्दस्तु गायत्री देवता भगवान् हरिः ।
उद्यदादित्यवर्णश्च ज्ञानमुद्राभयोद्यतः ॥ ३६ ॥

तारेण व्याहृतीभिश्च ज्ञेयान्यङ्गानि पञ्च च ।
नाभिहृत्केपु सर्वेपु चतस्रो व्याहृतीर्न्यसेत् ॥ ३७ ॥

द्वादशार्णस्य जगती च्छन्दोऽन्यत्तारवत्स्मृतम् ।
अच्छवर्णोऽभयवरकरो ध्येयोऽमितद्युतिः ॥ ३८ ॥

पदैर्व्यस्तैः समस्तैश्च ज्ञेयान्यङ्गानि पञ्च च ।
अष्टाक्षराणां स्थानेषु बाह्वोरूर्वोश्च विन्यसेत् ॥ ३९ ॥

विश्वामित्रस्तु सन्ध्यार्थे तदन्यत्र प्रजापतिः ।
मुनिर्देवस्तु सवितृनामा स्रष्टृत्वतो हरिः ॥ ४० ॥

प्रोद्यदादित्यवर्णश्च सूर्यमण्डलमध्यगः ।
चक्रशङ्खधरोऽङ्कस्थदोर्द्वयो ध्येय एव च ॥ ४१ ॥

सताराश्च व्याहृतयो गायत्र्यङ्गानि पञ्च च ।
दोःपत्सन्धिषु साग्रेषु नाभिहृन्मुखकेषु च ॥ ४२ ॥

वर्णन्यासश्च कर्तव्यस्तारवन्निखिलं स्मृतम् ।
पञ्चाशदक्षराणां च पुंसूक्तस्यापि सर्वशः ॥ ४३ ॥

अनुष्टुभश्च त्रिष्टुप् च छन्दोऽस्य त्रिष्टुभोऽपि वा ।
विष्णुशब्दश्चतुर्थ्यन्तो हृदयेतः षडक्षरः ॥ ४४ ॥

तारवत्सर्वमस्यापि श्यामो ध्येयो हरिः स्वयम् ।
वर्णा एव षडङ्गानि षणयोर्भेदयोगतः ॥ ४५ ॥

पञ्चानुनाभिहृन्नासाकेषु न्यासश्च वर्णशः ।
एते तु सर्वमन्त्राणां मूलमन्त्रा विशेषतः ॥ ४६ ॥

एतज्ज्ञानात्समस्तं च ज्ञातं स्याच्छब्दगोचरम् ।
एतज्जपात्समस्तानां मन्त्राणां जापको भवेत् ॥ ४७ ॥

पूज्यश्च भगवान्नित्यं चक्राब्जादिकमण्डले ।
हृदये वाऽचले वाऽपि जले वा केवले स्थले ॥ ४८ ॥

अष्टाक्षरेण सम्पूज्य प्रथमं देवतां पराम् ।
मध्ये सव्ये गुरूंश्चैव दक्षिणे सर्वदेवताः ॥ ४९ ॥

पुनः सव्ये सर्वगुरूनाग्नेयादिषु च क्रमात् ।
गरुडं व्यासदेवं च दुर्गां चैव सरस्वतीम् ॥ ५० ॥

धर्मं ज्ञानं च वैराग्यमैश्वर्यं चैव कोणगान् ।
तदन्तः पूर्वदिक्पूर्वमधर्मादींश्च पूजयेत् ॥ ५१ ॥

अपूजिता अधर्मादिदातारस्ते तथाऽभिधाः ।
निर्ऋतिश्चैव दुर्गा च कामो रुद्रश्च देवताः ॥ ५२ ॥

यमवायुशिवेन्द्राश्च ज्ञेया धर्मादिदेवताः ।
परमः पुरुषो मध्ये शक्तिराधाररूपिणी ॥ ५३ ॥

कूर्मोऽनन्तश्च पृथिवी क्षीरसागर एव च ।
श्वेतद्वीपो मण्टपश्च दिव्यरत्नमयो महान् ॥ ५४ ॥

पद्ममेतत्त्रयं देवी रमैव वहुरूपिणी ।
सूर्यसोमहुताशाश्च पद्मे श्रीस्त्रिगुणात्मिका ॥ ५५ ॥

आत्मान्तरात्मपरमज्ञानात्मानश्च मूर्तयः ।
विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथैव च ॥ ५६ ॥

प्रह्वी सत्या तथेशानाऽनुग्रहा चेति शक्तयः ।
अष्टदिक्षु च मध्ये च स्वरूपाण्येव ता हरेः ॥ ५७ ॥

ततोऽनन्तं योगपीठस्वरूपं पूजयेद्धरेः ।
तत्राऽवाह्य हरिं चार्घ्यं पाद्यमाचमनीयकम् ॥ ५८ ॥

मधुपर्कं पुनश्चाऽर्चां स्नानं वासो विभूषणम् ।
उपवीतासने दत्वा गन्धपुष्पे तथैव च ॥ ५९ ॥

लक्ष्मीधरे यजेत्तत्र पार्श्वयोरुभयोर्हरेः ।
हृदयादींस्तथेन्द्रादिदिक्ष्वस्त्रं कोणकेषु च ॥ ६० ॥

वासुदेवादिकान् दिक्षु केशवादींस्ततः परम् ।
मत्स्यकूर्मवराहांश्च नारसिंहं च वामनम् ॥ ६१ ॥

भार्गवं राघवं कृष्णं बुद्धं कल्किनमेव च ।
अनन्तं विश्वरूपं च तद्बहिः पूजयेत्क्रमात् ॥ ६२ ॥

अनन्तब्रह्मवाय्वीशान्वीशं चाग्रे प्रपूजयेत् ।
वारुणीं चैव गायत्रीं भारतीं गिरिजामपि ॥ ६३ ॥

कोणेषु वीन्द्रवामे च सौपर्णीं पूजयेदपि ।
इन्द्रादीन् शेषविष्वक्सेनान्तान् सभार्यान् सपरिग्रहान् ॥ ६४ ॥

धूपदीपौ ततो दत्वा नैवेद्यं मूलमन्त्रतः ।
अनेन क्रमयोगेन जुहुयात्संस्कृतेऽनले ॥ ६५ ॥

पुष्पाञ्जलिश्च होमश्च मूलेनाष्टोत्तरं शतम् ।
सकृत्सकृत्पुष्पमन्यैर्होमस्तस्य चतुर्गुणः ॥ ६६ ॥

विसर्जयित्वा नैवेद्यं मूलेन त्रिः समर्च्य च ।
धूपदीपौ पुनर्दत्वा पुनर्मूलेन पूर्ववत् ॥ ६७ ॥

अर्चयित्वा पुनर्ध्यात्वा जपेदष्टोत्तरं शतम् ।
पुनर्ध्यायेद्धरिं सर्वदेवदेवेश्वरं प्रभुम् ॥ ६८ ॥

जपध्यानहुतार्चादीनेवं यः कुरुते सदा ।
धर्मार्थकाममोक्षाणां भाजनं स्यात्स एव हि ॥ ६९ ॥

सर्वोत्तमं हरिं ज्ञात्वा य एवं भक्तिपूर्वकम् ।
जपध्यानादिभिर्नित्यं पूजयेन्नास्य दुर्लभम् ॥ ७० ॥

भक्तिं कृत्वाऽन्यदेवेषु ब्रह्मरुद्रादिकेष्वपि ।
सर्वोत्कर्षमविज्ञाय विष्णोर्याति तमो ध्रुवम् ॥ ७१ ॥

न यज्ञा न च तीर्थानि नोपवासव्रतानि च ।
दैवतानि च सर्वाणि त्रातुं तं शक्नुयुः क्वचित् ॥ ७२ ॥

हरिर्हि सर्वदेवानां परमः पूर्णशक्तिमान् ।
स्वतन्त्रोऽन्ये तद्वशा हि सर्वेऽतः स जगद्गुरुः ॥ ७३ ॥

ब्रह्मादयश्च तद्भक्त्या भागिनो भोगमोक्षयोः ।
तस्माज्ज्ञेयश्च पूज्यश्च वन्द्यो ध्येयः सदा हरिः ॥ ७४ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
तन्त्रसारसङ्ग्रहे प्रथमोऽध्यायः ॥

★★★

## द्वितीयोऽध्यायः

यस्य कस्यापि मन्त्रस्य न्यासः पञ्चाशदक्षरैः ।
वीर्यदः केऽभितो वक्त्रमक्षिकर्णेषु नासयोः ॥ १ ॥

गण्डयोरोष्ठयोर्दन्तपङ्क्त्योर्मूर्धनि वाचि च ।
दोःपत्सन्धिषु साग्रेषु पार्श्वयोः पृष्ठगुह्ययोः ॥ २ ॥

तुन्दे च हृदि धातूनां सप्तके प्राणजीवयोः ।
सक्षकारान् न्यसेद्वर्णान् नृसिंहः क्षस्य देवता ॥ ३ ॥

जपे न्यासे च विहितः क्षोऽक्षराणां सदाऽन्ततः ।
प्राणायामो रेचयित्वा पूरयित्वा च कुम्भके ॥ ४ ॥

तारैस्त्रिद्वादशावृत्तैर्व्येकद्वादशकेन वा ।
तत्तन्मन्त्रेण वा कार्यो गायत्र्या दशतारकैः ॥ ५ ॥

आदावेव जपे कुर्याच्छोषणं दहनं प्लुतिम् ।
वाय्वग्निवारुणैर्बीजैर्ध्यात्वा तन्मण्डले हरिम् ॥ ६ ॥

एकपञ्चाशद्वर्णानां चतुर्विंशतिमूर्तयः ।
आत्माद्या वासुदेवाद्या विश्वाद्या मत्स्यकच्छपौ ॥ ७ ॥

कोलो नृसिंहः सवटुर्जामदग्न्यरघूद्वहौ ।
वासिष्ठयादवौ कृष्णावात्रेयो बुद्धकल्किनौ ॥ ८ ॥

शिंशुमारश्चेति शतं कलाः कलशनामकाः ।
एताभिः सहितां मूलमूर्तिं कुम्भोदके सुधीः ॥ ९ ॥

पूर्वोक्तविधिनाऽभ्यर्च्य प्रतिमां शिष्यमेव वा ।
स्नापयेत्पूर्वमर्चायां जपोऽनूनः सहस्रतः ॥ १० ॥

मूलमन्त्रस्य चाङ्गानां न्यासः स्नानादनन्तरम् ।
प्रतिमायां सन्निधिकृच्छिष्ये माहात्म्यकृद्भवेत् ॥ ११ ॥

कलशः कीर्तिमायुष्यं प्रज्ञां मेधां श्रियं बलम् ।
योग्यतां पापहानिं च पुण्यवृद्धिं च साधयेत् ॥ १२ ॥

उपसर्गेषु जातेषु दैवभूतात्महेतुषु ।
आयुषे वाऽथ शान्त्यै वा श्रिये वा पुण्यवृद्धये ॥ १३ ॥

योग्यतायै मन्त्रसिद्ध्यै विष्णोः प्रीत्यर्थमेव वा ।
जुहुयात्सहस्रमयुतं लक्षं कोटिमथापि वा ॥ १४ ॥

पूर्ववत्संस्कृते वह्नौ ध्यात्वा देवं जनार्दनम् ।
कृत्वा त्रिमेखलं कुण्डं चतुर्विंशाङ्गुलोच्छ्रितम् ॥ १५ ॥

तावत्खातं चतुष्कोणमुच्छ्रितं द्वादशैव वा ।
व्यङ्गुलं त्र्यङ्गुलं वाऽपि चतुरङ्गुलमेव वा ॥ १६ ॥

विस्तारो मेखलानां स्यादन्त्या वा चतुरङ्गुला ।
चतुर्विंशाङ्गुला वा तद्विस्तारो द्वादशैव वा ॥ १७ ॥

अश्वत्थपत्राकृतिः स्यान्मूलतो द्वादशाङ्गुला ।
योनिः खाते च विनता प्रविष्टा व्यङ्गुलं तथा ॥ १८ ॥

तदात्मनि हरिं ध्यात्वा कुण्डे देवीं श्रियं तथा ।
विष्णुवीर्यात्मकं वह्निं निक्षिपेत्प्रणवेन तु ॥ १९ ॥

कुर्यात्क्रियाः षोडश च व्याहृतीभिः पृथक् पृथक् ।
वह्नेस्तद्वहरेः प्रीतिं कुर्वन् द्रव्यैर्यजेत्ततः ॥ २० ॥

आज्येन वा पायसेन समिद्भिः क्षीरिणामथ ।
तिलैर्वा तण्डुलैर्वाऽपि मधुरैस्त्रिभिरेव वा ॥ २१ ॥

ब्रह्मवृक्षसमिद्भिर्वा समिद्भिर्वाऽमृतोद्भवैः ।
अमृताः समिधो ज्ञेयाः सर्वत्र चतुरङ्गुलाः ॥ २२ ॥

एवमेव तु (च) दीक्षायामाज्येनैवाऽहुतिक्रिया ।
पूजा च कार्या विधिवत्पूर्वं सर्वहुतेष्वपि ॥ २३ ॥

गुरवे दक्षिणां दद्याल्लक्षे लक्षे शतं सुधीः ।
आत्मनैव कृते होमे शक्तितो गुरुदक्षिणाम् ॥ २४ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
तन्त्रसारसङ्ग्रहे द्वितीयोऽध्यायः ॥

★★★

## तृतीयोऽध्यायः

प्रतिष्ठां कारयन् विष्णोः कुर्यात् सुप्रतिमां बुधः ।
लोहैर्वा शिलया दार्वा मृदा वाऽपि यथाक्रमम् ॥ १ ॥

पण्णवत्यङ्गुलां योग आसीनामथवा स्थिताम् ।
शयानां वा मुमुक्षूणां व्याचक्षाणां निजां स्थितिम् ॥ २ ॥

मुखादूर्ध्वं द्व्यङ्गुलोच्चां नवाङ्गुललसन्मुखाम् ।
सुवृत्तत्र्यङ्गुलग्रीवामास्तनाच्च षडङ्गुलाम् ॥ ३ ॥

पञ्चादशाङ्गुलां नाभेरासार्धदशकाङ्गुलाम् ।
वृषणादा मूलतश्च सार्धद्व्यङ्गुलमायताम् ॥ ४ ॥

तावदा गुदतो दीर्घां चैत्यादष्टादशाङ्गुलाम् ।
तथा द्व्यङ्गुलचैत्यां च द्वाविंशज्जङ्घया युताम् ॥ ५ ॥

आरभ्य गुल्फमध्यं च सहार्धचतुरङ्गुलाम् ।
षडङ्गुलोच्चप्रपदां सार्धव्यङ्गुलमेव च ॥ ६ ॥

प्रपदोच्चयुतामन्ते व्यङ्गुलप्रपदोच्छ्रयाम् ।
त्र्यङ्गुलव्यङ्गुलामर्धहीनमध्याङ्गुलामपि ॥ ७ ॥

त्रिपदाङ्गुलहीनान्यां ततस्तादृशतत्पराम् ।
पादोनोच्चाङ्गुष्ठनखां तदर्धतदनन्तराम् ॥ ८ ॥

क्रमशः पादहीनान्यां रक्तपादनखां शुभाम् ।
विस्तारः प्रपदस्यापि षडङ्गुल उदाहृतः ॥ ९ ॥

अङ्गुष्ठपरिणाहस्तु चतुरङ्गुल ईरितः ।
त्र्यङ्गुलस्तु तदन्यस्य व्रीह्यर्धोनाः क्रमात् पराः ॥ १० ॥

दशाङ्गुलं जङ्घमूलं मध्यं तु त्र्यङ्गुलाधिकम् ।
सप्तादशाङ्गुलं तूर्ध्वं जानुरष्टादशाङ्गुलः ॥ ११ ॥

ऊर्वन्तोऽपि तथा ज्ञेयो मध्यं द्विर्द्वादशाङ्गुलम् ।
चतुरङ्गुलाधिकं मूलं गुह्यं सार्धचतुष्टयम् ॥ १२ ॥

सार्धत्रयं परीणाहाद् वृषणं चतुरङ्गुलम् ।
सप्ताङ्गुलं परीणाहाद् वृत्तं प्रोक्तं समस्तशः ॥ १३ ॥

अष्टत्रिंशाङ्गुलं कट्याः परीणाह उदाहृतः ।
सुवृत्तत्वं तथा श्रोण्योः पीनत्वं च समस्तशः ॥ १४ ॥

विस्तारश्च तथा कट्याः सुप्रतिष्ठितता पदोः ।
कट्याश्चैवाङ्गुलाधिक्यं नाभेरध उदाहृतम् ॥ १५ ॥

नाभिः सार्धाङ्गुलश्चैव गम्भीरोऽर्धाङ्गुलोन्नतः ।
वृत्तः प्रदक्षिणश्चैव द्विचत्वारिंशदङ्गुलम् ॥ १६ ॥

मध्यं स्तने परीणाहः षडङ्गुलमतोऽधिकः ।
एकोनविंशाङ्गुलं तदुरोविस्तारलक्षणम् ॥ १७ ॥

पादोनमङ्गुलं चैव भुजाभ्यां सह सार्धकम् ।
अंसयोर्विस्तृतिश्चैव पृथगष्टाङ्गुला मता ॥ १८ ॥

सप्ताङ्गुलोच्छ्रयः कक्षादुपरि स्कन्धयोर्मतः ।
अष्टत्रिंशाङ्गुलं चैव हस्तयोर्मानमुच्यते ॥ १९ ॥

अष्टादशाङ्गुलो बाह्वोः परीणाह उदाहृतः ।
क्रमादूनं तदन्ते तु सार्धाष्टाङ्गुलमीरितम् ॥ २० ॥

साङ्गुलस्तु तलः सार्धनवाङ्गुल उदाहृतः ।
समं तदुभयं ज्ञेयं तथैव तलविस्तृतिः ॥ २१ ॥

अर्धाङ्गुलोन्नता मध्या द्वयोः सार्धाङ्गुलोन्नता ।
कनिष्ठिकायास्तस्यास्तु व्रीहिमात्राधिकः परः ॥ २२ ॥

सार्धत्रयपरीणाहौ मध्यज्येष्ठावुदाहृतौ ।
अन्यौ व्रीहितदर्धोनावन्या सार्धद्वयाङ्गुला ॥ २३ ॥

पादोनान्तपरीणाहाः सर्वे ज्येष्ठां विना स्मृताः ।
वक्षोविस्तारसदृशः परीणाहो गलस्य च ॥ २४ ॥

ललाटकुक्षिकण्ठास्तु दीर्घरेखात्रयान्विताः ।
वृत्तो गलो बाहवश्च स्तनावङ्गुलयस्तथा ॥ २५ ॥

रक्तास्तलनखाश्चैव नेत्रान्तोऽधर एव च ।
उत्तरोष्ठश्च जिह्वा च नखौ पादोनकाङ्गुलौ ॥ २६ ॥

अर्धाङ्गुलौ तथा मध्यावन्येऽष्टांशक्रमोनकाः ।
नासिकाया अधस्ताच्च नासिका च रराटिका ॥ २७ ॥

समा मानेन नासाया उच्चत्वेनैव मापने ।
अर्धाङ्गुलाधिकं सर्वमुखस्य तु भविष्यति ॥ २८ ॥

चतुरङ्गुलं तथैवास्यं सार्धव्रीह्यधरं स्मृतम् ।
उत्तरं व्रीहिमात्रं तु तदूर्ध्वं चाधरोपमम् ॥ २९ ॥

सार्धाङ्गुलमधः प्रोक्तमधरादध एव च ।
आस्यपार्श्वद्वयं प्रोक्तमाकर्णात्तु षडङ्गुलम् ॥ ३० ॥

सप्ताङ्गुलं नासिकायाः पार्श्वमाकर्णतः स्मृतम् ।
सपादाङ्गुलमुच्चा च नासिका परिकीर्तिता ॥ ३१ ॥

अर्धाङ्गुले पुटे तस्या मध्यं च समुदाहृतम् ।
नासिका व्रीहिविस्तारा चक्षुषी चाङ्गुलत्रये ॥ ३२ ॥

अङ्गुलं चैव विस्तीर्णे फुल्लेऽर्धं च तदन्यथा ।
चतुरङ्गुलौ भ्रुवौ चैव तथाऽर्धाङ्गुलविस्तृतौ ॥ ३३ ॥

असंहतौ च निविडौ तथा पक्ष्म सुनीलकम् ।
कर्णौ च त्र्यङ्गुलं सार्धद्वयविस्तारसंयुतौ ॥ ३४ ॥

सकुण्डलं तावदेव विवरं सम्प्रकीर्तितम् ।
तथा द्व्यङ्गुलविस्तारं लताभ्यां सह कथ्यते ॥ ३५ ॥

कर्णपूरयुतौ कर्णावुत्पलाभ्यां च संयुतौ ।
नीलालकसहस्रेण युक्तं तन्मुखपङ्कजम् ॥ ३६ ॥

ललाटं सुविशालं च तथा सार्धनवाङ्गुलम् ।
विस्तारो मूर्ध्नि वृत्तं च शिरः छत्राकृति स्मृतम् ॥ ३७ ॥

दीर्घाश्च कुञ्चिताग्राश्च नीलाः केशा हरेर्मताः ।
मुखमानेन चैवोच्चं किरीटं केशवस्य हि ॥ ३८ ॥

कुण्डले मकराकारे वक्षश्चैव सकौस्तुभम् ।
सश्रीवत्सं दक्षिणतः पीनं तुङ्गमुदाहृतम् ॥ ३९ ॥

हारग्रैवेयसहितमुपवीतयुतं तथा ।
वाहवश्च सकेयूरकङ्कणाङ्गदमुद्रिकाः ॥ ४० ॥

समध्यवन्धं मध्यं च नितम्वे पीतमम्वरम् ।
काञ्चीगुणश्च पदयोर्नूपुरे चातिसुस्वने ॥ ४१ ॥

अङ्गुलीयानि च पदोः कृतिभिः साधु कारयेत् ।
सोत्तरीयं च चक्राद्यैरायुधैश्च समन्वितम् ॥ ४२ ॥

अनुन्नतैरविरलैर्दन्तैर्युक्तं च सुस्मितम् ।
समदृष्टियुतं कार्यं श्लक्ष्णं चैव मनोहरम् ॥ ४३ ॥

प्रतिमार्थं व्रजन्पश्चध्वनिभिर्मङ्गलैर्युतः ।
गत्वा शुचिस्थलं तत्र शिलां चैव परीक्षयेत् ॥ ४४ ॥

ध्वनिभेदेन विज्ञाय शिलां गर्भवतीं त्यजेत् ।
मूलमन्त्रं जपन् विष्णुं ध्यायंस्तिष्ठेदुपोषितः ॥ ४५ ॥

वार्क्षीं चेयङ्गवृक्षस्य सारेणैव तु कारयेत् ।
बलिदानं च सङ्क्षेपविधानेनैव कथ्यते ॥ ४६ ॥

अस्य सङ्क्षेपशास्त्रत्वान्न विस्तरविरोधिता ।
दत्वोपहारं हरये तद्भूतेभ्यो बलिं हरेत् ॥ ४७ ॥

प्राच्येभ्यो विष्णुभूतेभ्य इत्याद्यखिलदिक्षु च ।
आदाय विष्णुभूतेभ्यो लोकपेभ्यस्तथा हरेः ॥ ४८ ॥

अनुज्ञामुद्धरेद् वृक्षं शिलां वा प्रतिमाकृते ।
प्रतिमां पिण्डिकां पीठं शिलाभिस्तु त्रिजातिभिः ॥ ४९ ॥

स्वरस्थूलत्वभेदेन पुंस्त्र्याद्या जातितः शिलाः ।
पुंशिलां प्रतिमार्थं तु स्त्रीशिलां पीठक्लृप्तये ॥ ५० ॥

वेदमङ्गलघोषेण वाद्यैस्तत्प्रतिमां हरेत् ।
प्रागुदक्प्रवणे देशे कुर्याद्देवालयं सुधीः ॥ ५१ ॥

रामावृते दक्षिणतः पश्चाद्दिर्यग्र एव वा ।
मध्ये वा ग्रामपुरयोर्विशाले सुशुचौ तथा ॥ ५२ ॥

ऐशानीं दिशमेकां तु विनोदकविवर्जिते ।
जलाशयस्य मध्ये वा शिलावृक्षादिवर्जिते ॥ ५३ ॥

श्मशानादिकदेशानां विदूरे सुमनोहरे ।
किष्कुद्वादशतोऽनूनं कुर्याद्देवालयस्थलम् ॥ ५४ ॥

द्विगुणं चतुर्गुणं वापि शतकिष्कुप्रमाणकम् ।
कृत्वा भूशोधनं सम्यक् सार्धपुंमानतस्त्वधः ॥ ५५ ॥

केशाङ्गारास्थिवल्मीकलोष्टाश्मादिविवर्जिते ।
हरिं तत्रापि सम्पूज्य वलिं दत्वा च पूर्ववत् ॥ ५६ ॥

मृद्दारुशैलैर्लोहैर्वा कुर्याद्देवालयं दृढम् ।
दीर्घस्थकलमास्तिस्रस्तिर्यगष्टयवोदराः ॥ ५७ ॥

अङ्गुल्या मध्यरेखायाः समा लक्षणतः स्मृताः ।
स्वाङ्गुल्या मध्यरेखा तु प्रतिमादिषु लक्षणम् ॥ ५८ ॥

ह्रस्वमध्योच्चभेदेन तत्तन्मानं समस्तशः ।
प्रादेशहस्तपुरुषमानं सामान्यलक्षणम् ॥ ५९ ॥

प्रतिमाध्यर्धकं द्वारमूर्ध्वमध्यं च विस्तृतिः ।
प्रतिमार्धप्रमाणेन पीठस्योच्चत्वमिष्यते ॥ ६० ॥

उन्नतिः पिण्डिकायास्तु चतुरङ्गुलमानतः ।
त्र्यङ्गुलं द्व्यङ्गुलं वाऽपि गृहान्तः प्रतिमासमम् ॥ ६१ ॥

उच्चं पर्यक् च क्रमश उच्चत्वं मध्यतः स्मृतम् ।
तावदुच्चं वहिश्चैव यद्येकशिखरं भवेत् ॥ ६२ ॥

अर्धोच्चमथवाऽपि स्यादधस्तात् प्रतिमोन्नतम् ।
ततो द्विगुणमानं वा सार्धप्रतिममेव वा ॥ ६३ ॥

शिखरान्तरे तु प्रतिमामानं तद्गल उच्यते ।
तत्त्रिपादं तदर्धं वा तदध्यर्धमथापि वा ॥ ६४ ॥

वर्तुलं पद्मसदृशं हस्तिपृष्ठसमं तथा ।
चतुरस्रं चाष्टकोणं विमानं परिकीर्तितम् ॥ ६५ ॥

प्रतिमाया दशगुणं विंशद्गुणमथापि वा ।
वर्तुलं शिखरं त्वेकं किरीटाकृतिमद्भवेत् ॥ ६६ ॥

सभयाऽपि समेतं वा पृथक्सभमथापि वा ।
द्विसभं त्रिसभं वापि सगोपुरमथापि वा ॥ ६७ ॥

प्राकारवृत्तयुक्तं वा सप्तप्राकारमेव वा ।
सप्तवृत्तं किष्कुमात्रं बहिर्वा चतुरस्रकम् ॥ ६८ ॥

ततः परं किष्कुमात्रं सभाया अन्तरं यदि ।
ततस्तावत्तृतीयायाः सार्धमेव ह्युदाहृतम् ॥ ६९ ॥

किष्कुत्रयं च शक्रादेः स्थानं तद्वृत्ततः स्मृतम् ।
ततस्तु मण्टपं कुर्यात्प्रतिष्ठायाः सुलक्षणम् ॥ ७० ॥

पूजयेद्वास्तुपुरुपस्योपरिष्टांस्तु सर्वदा ।
देवान् ब्रह्मादिकान् वास्तुर्वराहस्य हरेः सुतः ॥ ७१ ॥

पातितो दैवतैर्भूमौ चतुरस्राकृतिः स्थितः ।
कृत्वाऽष्टकाष्टकोष्ठानि मध्ये ब्रह्मा चतुष्टये ॥ ७२ ॥

पूज्यो द्वये द्वये शक्रो यमो वरुण एव च ।
सोमश्च पूज्याः कोणेपु वह्न्याद्याः कोणदेवताः ॥ ७३ ॥

पुनस्त्रये त्रये कामं धातारं सविधातृकम् ।
स्कन्दं च पूजयेत्कोणे सूर्यं चैव विनायकम् ॥ ७४ ॥

कालं कुवेरं च वहिः प्रत्येकं दिक्षु पूजयेत् ।
हारिं हरिं गभीरं च गाहनं गहनं गुहम् ॥ ७५ ॥

भातमङ्गारकं चैव पूर्वस्यां दिशि पूजयेत् ।
दारुणं विदरिं द्योतं प्रद्योतं द्योतनं दरिम् ॥ ७६ ॥

मृत्युं शनैश्चरं चैव दक्षिणस्यां प्रपूजयेत् ।
पुष्करं क्षरणं क्षा(रं)रिं विक्षणं क्षोभणं क्षणम् ॥ ७७ ॥

चार्वङ्गं भार्गवं चैव पश्चिमायां प्रपूजयेत् ।
चारं विचारं प्रचरं सञ्चारं चरणं चरम् ॥ ७८ ॥

बृहस्पतिं बुधं चैवाप्युत्तरस्यां प्रपूजयेत् ।
एवमेव विमानस्य कृतेः प्रागपि पूजयेत् ॥ ७९ ॥

सप्तपर्णमयं साधु कारयेन्मण्टपं ततः ।
सप्तहस्तं द्विपङ्क्तमथवा द्विगुणं ततः ॥ ८० ॥

चतुर्गुणं वा सम्यक् तु चतुरस्रं सहाजिरम् ।
अन्यच्च मण्टपं दीर्घं पञ्चहस्तं तु कारयेत् ॥ ८१ ॥

त्रिचतुष्कोष्ठकं तत्र मध्ये प्रागायतं शुभम् ।
कारयेन्मण्डलं साधु हस्तमात्रं तु (सु) विस्तृतम् ॥ ८२ ॥

तत्र द्वादशपात्राणि स्थापयेत्पालिकादिकम् ।
पालिकास्तु चतुर्विंशत्यङ्गुलोच्छ्रयसंयुताः ॥ ८३ ॥

अष्टादशाङ्गुलाश्चैव तथा पञ्चमुखा इति ।
द्वादशाङ्गुलकाश्चैव शरावाः पश्चिमानुगाः ॥ ८४ ॥

तत्र विष्णुं चतुर्मूर्तिं पूजयेद्भक्तितस्त्रिशः ।
सप्तधान्यानि तेष्वेव पूरयेदङ्कुरार्थतः ॥ ८५ ॥

तत्र नित्यं बलिं दद्याद्विष्णवे दशरात्रकम् ।
ब्रह्मशङ्करगीर्वाणपितृगन्धर्वपक्षकैः ॥ ८६ ॥

भूतैश्च पायसेनैव तथा पद्माक्षतेन च ।
अन्नापूपेन पुष्पान्नैरन्नलाजाक्षतैरपि ।
सक्तुभिश्च क्रमेणैव देवान्तं पायसेन वा ॥ ८७ ॥

तदैव प्रतिमायाश्च कारयेदधिवासनम् ।
पञ्चगव्ये सप्तरात्रं क्षिप्त्वा पुरुषसूक्ततः ॥ ८८ ॥

वेदांश्च चतुरः सम्यक् पारयेयुर्द्विजोत्तमाः ।
प्राच्यादिद्वारगौ द्वौ द्वावेकैकं तु दशावराः ।
यथालब्धं यथावित्तमथवा विष्णुतत्पराः ॥ ८९ ॥

त्रयोदशात्र कुण्डानि परितः कारयेद्बुधः ।
उक्तलक्षणयुक्तानि प्रधानं त्वग्निकोणके ।
साक्षात्तु कोणगाद्धस्तमात्रमन्तरतः सुधीः ॥ ९० ॥

आज्याहुतिं तेषु कुर्यात् प्रत्येकं लक्षसङ्ख्यया ।
प्रत्येकमयुतं वाऽपि प्रधाने लक्षसङ्ख्यकम् ॥ ९१ ॥

अर्धं तदर्धमथवा मूलमन्त्रेण मन्त्रवित् ।
पञ्चविंशतितत्वार्थे प्रधाने जुहुयात् पुरः ॥ ९२ ॥

प्रत्येकं तु सहस्रं वा प्रत्येकं शतमेव वा ।
शतं पुरुषसूक्तेन गायत्र्या च सहस्रकम् ।
कृत्वा जलाधिवासं च पूर्वं वा पञ्चगव्यतः ॥ ९३ ॥

चक्राब्जं भद्रकं वाऽपि मण्टपे मण्डलं शुभम् ।
पद्मं वृत्तत्रयं चक्रं राशयो वीथिका लताः ॥ ९४ ॥

शोभोपशोभिकाश्चैव चक्राब्जस्य तु लक्षणम् ।
चतुरश्रं विना चक्रं विशेषो भद्रके स्मृतः ॥ ९५ ॥

सहस्रमर्धं पादं वा कलशांस्तत्र पूजयेत् ।
शतं तदर्धं पादं वा वित्ताभावे निगद्यते ॥ ९६ ॥

क्काथेन क्षीरवृक्षाणां तथा पञ्चामृतैरपि ।
पञ्चगव्येन शुद्धेन जलेन च पृथक् पृथक् ॥ ९७ ॥

पूरयेत्कलशान्मध्यं शुद्धोदेनैव पूरयेत् ।
ब्राह्मस्यैव चतुर्दिक्षु गन्धोदानां चतुष्टयम् ॥ ९८ ॥

चतुर्दले सिते पद्मचतुष्के मण्डले स्थिते ।
पूर्वादिक्रमयोगेन रसक्काथशुभोदकान् ॥ ९९ ॥

गन्धांश्च स्थापयेत्पञ्चगव्यं शुद्धान्तरे न्यसेत् ।
पृथक् चतुर्दलं पद्मं रक्तं कृत्वाऽल्पकं सुधीः ॥ १०० ॥

पञ्चाशत्वे तु गन्धोदं सर्वमध्ये निधापयेत् ।
ब्राह्मस्य पुरतस्त्वेकं शार्वं संस्थापयेद्बृहत् ॥ १०१ ॥

अष्टदिक्ष्वष्टपद्मेषु पञ्चकं पञ्चकं न्यसेत् ।
अनेन क्रमयोगेन कलशा अखिला अपि ॥ १०२ ॥

तत्तद्द्रव्यमयास्तत्र तत्र स्थाप्यास्तु वाह्यतः ।
तदैवाङ्कुरपात्राणि परितस्तत्र विन्यसेत् ॥ १०३ ॥

कुशोदकं च कार्पूरं कौङ्कुमं चान्दनं तथा ।
तुहिनोदं हरिद्रोदमौशीरं कोष्ठसार्षपम् ॥ १०४ ॥

नदीसङ्गमजं चैव ताटाकं कौप्यमेव वा ।
निर्झरोदमिति प्रोक्ता विशेषकलशा इमे ।
शुद्धोदद्वयमप्येतन्महातीर्थसमुद्भवम् ॥ १०५ ॥

चतुर्विंशतिमूर्तीनां वर्णमूर्तीस्तथाऽपराः ।
आवाहयेच्छतत्वे तु क्रमव्युत्क्रमतस्तु ताः ॥ १०६ ॥

वर्णमूर्तीः पुनश्चैव द्विचतुर्वारमेव च ।
सहस्रकलशादित्वे जपेन्मन्त्रांश्च शक्तितः ॥ १०७ ॥

ततस्तु पञ्चघोषैश्च वेदघोषैस्तथाऽऽदरात् ।
आनीय प्रतिमां स्नानं कारयेत्प्रणवेन तु ॥ १०८ ॥

मन्त्रैः पुरुषसूक्तान्तैः विश्वतश्चक्षुषा तथा ।
पुनश्चाष्टाक्षरेणैव प्रणवेनैव भक्तितः ॥ १०९ ॥

स्नापयित्वा गन्धजलैर्गन्धपुष्पादिभिः पुनः ।
अलङ्कृत्य स्थापयेत्तु प्रतिमां प्रणवेन तु ॥ ११० ॥

जपेदष्टाक्षरं मन्त्रं तत्तन्मूर्तिमनुं तथा ।
अष्टोत्तरशतं मन्त्री ध्यायेत्तेजोमयीं पुनः ॥ १११ ॥

प्रतिमां प्रतिमान्तस्थां तन्मध्ये परमं वपुः ।
चिदानन्दरसं सर्वगुणसम्पूर्णमुत्तमम् ॥ ११२ ॥

पञ्चविंशतितत्त्वानां देवतास्तदनन्तरम् ।
स्थापयेत् प्रतिमामध्ये परितः केशवस्य तु ॥ ११३ ॥

तत्रात्वाहार्षसूक्तं च घर्मसूक्तं च वैष्णवम् ।
सूक्तं च विश्वकर्मीयं पौरुषं सूक्तमेव च ॥ ११४ ॥

जप्त्वा चैव निजं मन्त्रं पुनरष्टाक्षरं सुधीः ।
प्रणवं च जपेद्विष्णुं ध्यायन्नुत्तमरूपिणम् ॥ ११५ ॥

ततस्तु कलशैर्वाह्यक्रमेणैव जनार्दनम् ।
स्नापयेदुक्तमन्त्रैस्तु मध्यमं प्रणवेन तु ॥ ११६ ॥

अष्टार्णेन निजेनापि तथा पुरुषसूक्ततः ।
आवाहनं च स्नपनं पञ्चगव्येन मध्यवत् ।
पूर्वाद्युत्तरपर्यन्तः कलशक्रम उच्यते ॥ ११७ ॥

जप्त्वा पुनश्च तन्मन्त्रान् पूजयेच्च विधानतः ।
द्वारलोकपतिभ्यश्च वलिं दत्वा यथाक्रमम् ॥ ११८ ॥

वस्त्ररत्नहिरण्याद्यैरलङ्कृत्य विभूतितः ।
गुरवे दक्षिणां दद्यात्कोटिं लक्षं सहस्रकम् ॥ ११९ ॥

शतमर्धं तदर्धं वा निःस्वो भक्त्या क्षमापयेत् ।
तदर्धमृत्विजां चैव तदर्धं पारणाकृताम् ॥ १२० ॥

आ श्वभ्य आ श्वपाकेभ्यो दद्यादन्नं समस्तशः ।
पुरस्तात्परतश्चैव सप्तरात्रं निरन्तरम् ॥ १२१ ॥

सुवर्णवस्त्ररत्नाद्यैरागताभ्यागतानपि ।
पूजयेच्छक्तितो भक्त्या प्रीयतां भगवानिति ॥ १२२ ॥

गीतनृत्यैश्च वाद्यैश्च पुराणैरितिहासकैः ।
सूक्तैर्मङ्गलघोषैश्च वैदिकैर्दिनसप्तकम् ॥ १२३ ॥

नयेत्ततो महाराजविभूत्याऽवभृथं सुधीः ।
कारयेद्देवदेवस्य स्वाध्यायैर्गीतनृत्तकैः ॥ १२४ ॥

महानदीसङ्गमे तु तीर्थे चातिप्रशस्तके ।
स्नापयेत्पूर्ववन्मन्त्रैः पुंसूक्तान्तैः स्मरन् हरिम् ॥ १२५ ॥

ततः पूर्ववदागत्य प्रवेश्य पुरुषोत्तमम् ।
पूजयित्वा विधानेन दत्वा दानानि शक्तितः ॥ १२६ ॥

गुरुं च भक्त्या सम्पूज्य स्वीकुर्यादाशिषस्ततः ।
शतप्रस्थादनूनं तु नैवेद्यं पायसोत्तरम् ॥ १२७ ॥

दिनेष्वेतेषु दातव्यं सघृतंससितादिकम् ।
पश्चादपि यथाशक्ति पूजा कार्या हरेः सदा ॥ १२८ ॥

जीर्णालयोद्धृतौ चैव तत्त्वमन्त्रान् स्वकं तथा ।
प्रातिलोम्येन जस्वैव मूर्तौ सङ्कोचयेद्धरिम् ॥ १२९ ॥

उक्तेनैव विधानेन तदर्धविभवैः सुधीः ।
पादमात्रैरपि हरिं स्नापयित्वा यथोदितम् ॥ १३० ॥

एतेनैव विधानेन कृत्वा देवालयं पुनः ।
स्नापयेत्पुण्डरीकाक्षं द्विगुणेन प्रवाहणात् ॥ १३१ ॥

विभवेनानुलोमेन जपेन्मन्त्रान् पुनस्तथा ।
आराधयेज्जगन्नाथं ध्यायन् भक्त्या यथोदितम् ॥ १३२ ॥

यात्राऽपि पूर्ववत्तत्राप्युत्सवेषु च सर्वशः ।
कलशोक्तविधानेन पूजा वलिहृतिस्तथा ॥ १३३ ॥

उत्सवेषु सदा कार्या कलशश्चोत्सवादनु ।
यात्रास्नानं च कर्तव्यं सम्यगुक्तविधाननः ॥ १३४ ॥

चोरचण्डालपतितश्वोदक्यादिप्रवेशने ।
शवाद्युपहतौ चैव पूजाविच्छेदने तथा ॥ १३५ ॥

स्नपनोक्तेन मार्गेण प्रायश्चित्तकृतिः स्मृता ।
सर्वत्र विष्णुगायत्र्या होमः स्याद्युतावरः ॥ १३६ ॥

नावाव्याद्यभिधानानु विद्महे धीमहे तथा ।
प्रचोदयात्तृतीयाधस्तन्नो गायत्रिनामिका ॥ १३७ ॥

दुर्गाशिवस्कन्दसूर्यविनायकमुखानपि ।
स्थापयेदुक्तमार्गेण तत्तन्मन्त्रैः स्मरन् हरिम् ॥ १३८ ॥

गोलकद्वितयं विष्णोस्त्रितयं वा प्रकीर्तितम् ।
अन्यदेवप्रतिष्ठासु तदन्तश्चिन्तयेद्धरिम् ॥ १३९ ॥

विष्णुस्मृतिविहीना तु पूजा स्यादासुरी तथा ।
गृह्णन्ति देवता नैतां ततः स्याद्देशविप्लवः ।
व्याधिचोरादिभिस्तस्मादन्तर्ध्येयो हरिः सदा ॥ १४० ॥

विष्णुभक्तिविहीनस्य गतिः स्यान्न शुभा क्वचित् ।
भक्तस्याप्यन्यदेवेषु तस्माद्ध्येयो हरिः सदा ॥ १४१ ॥

संस्मृतो भगवान् विष्णुः सर्वमङ्गलमङ्गलः ।
समस्ताभीष्टदायी स्यात्तेन ध्येयोऽखिलैर्जनैः ॥ १४२ ॥

पुरुषोऽव्यक्तं च महानहङ्कारो मनस्तथा ।
दशेन्द्रियाणि शब्दाद्या भूतेताः पञ्चविंशतिः ॥ १४३ ॥

तत्त्वाख्याः कालमाये च नियतिर्मतिरेव च ।
विद्या कला प्रवृतिश्च द्वात्रिंशत्तत्त्वसङ्ग्रहः ॥ १४४ ॥

स्फूर्तिः संवित्प्रतिष्ठा च शक्तिरित्यपराणि तु ।
महालक्ष्मीस्वरूपाणि ह्येकादश विदो विदुः ।
विष्णोरपि हि रूपाणि तन्नाम्नैकादशैव तु ॥ १४५ ॥

प्रधानोपमवर्णानि द्विभुजान्यप्यशेषतः ।
कृताञ्जलिपुटान्येव प्रधानं तं हरिं प्रति ॥ १४६ ॥

सर्वाण्येतानि तत्त्वानि ब्रह्मा तु पुरुषः स्मृतः ।
महांश्चाव्यक्तनाम्नी तु ब्रह्माणी सम्प्रकीर्तिता ॥ १४७ ॥

एवं वायुरपि ज्ञेयो भारती चापि तत्त्रयम् ।
रुद्रोऽहङ्कार उद्दिष्टः स्कन्देन्द्रौ मन उच्यते ॥ १४८ ॥

अहङ्कारः शेषवीन्द्रावपि विद्वद्भिरीरितौ ।
दिग्वायुसूनुसूर्याश्च वरुणश्चाश्विनावपि ॥ १४९ ॥

वह्निदक्षाविन्द्रसूनुर्मित्रश्चैव मनुस्तथा ।
इन्द्रियाख्याः शब्दनामा बृहस्पतिरुदाहृतः ॥ १५० ॥

अन्ये तु सूनवो वायो रुद्रस्यापि प्रकीर्तिताः ।
एतेषु भगवान् विष्णुः प्रधानतनुरेव तु ॥ १५१ ॥

ध्येयः परात्मनोर्मध्ये तत्त्वना(म)मा तदर्थयोः ।
जपे न्यासे नमोऽन्तस्तु स्वाहान्तो होमकर्मणि ॥ १५२ ॥

त्रिचतुःपट्दशावृत्तिरेतेषां तु हुतादिके ।
न्यासोऽङ्गुलीषूरुबाहुमध्येषु व्युत्क्रमे स्मृतः ।
क्रमे विपर्ययेणात्र शक्त्यादित्वं प्रकीर्तितम् ॥ १५३ ॥

ऋषिच्छन्दोदेवताङ्गध्यानानुक्तौ प्रधानवत् ।
ज्ञेया मन्त्राः समस्तास्ते पृथङ्मोक्षादिदायकाः ॥ १५४ ॥

तन्त्रमार्गास्तु हरिणा ह्यसङ्ख्याः कीर्तिता अपि ।
तेष्वयं सुगमो मार्गः सफलश्चानुतिष्ठताम् ॥ १५५ ॥

यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते ।
तावत् समस्तं कथितमस्मिंस्तन्त्रे यथाविधि ॥ १५६ ॥

प्रीयतेऽनेन मार्गेण पूजितो मुक्तिदो भवेत् ।
कामदश्च स्वभक्तानां भगवान् पुरुषोत्तमः ॥ १५७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
तन्त्रसारसङ्ग्रहे तृतीयोऽध्यायः ॥

★★★

## चतुर्थोऽध्यायः

अथ विष्णूदिते तन्त्रसारे मन्त्रगणो हि यः ।
उदितः सङ्ग्रहेणासावुच्यतेऽखिलसाधकः ॥ १ ॥

याष्टमस्तूयुतोऽन्तेन समेतश्चैव भूभृतः ।
वीजं नमश्च भगवान् सोद्देश्यो रूपसंयुतः ॥ २ ॥

स एव तादृशो लोकत्रयपालो भुवःपतेः ।
भावं मे देहि दान्ते तु दापय स्वाहया युतः ॥ ३ ॥

मनुस्तस्यापरस्तारबीजोद्देशनमोयुतः ।
नमः सोद्देशभगवान् महाशब्द्युतश्च सः ।
तादृशः स्वाहया युक्तो वराहस्यापरो मनुः ॥ ४ ॥

श्यामः सुदर्शनदराभयसद्वरेतो
भूम्या युतोऽखिलनिजोक्तपरिग्रहैश्च ।
ध्येयो निजैश्च तनुभिः सकलैरुपेतः
कोलो हरिः सकलवाञ्छितसिद्धयेऽजः ॥ ५ ॥

वैष्णवानां मुनिर्ब्रह्मा मन्त्राणां वर्णभेदतः ।
ज्ञेयं छन्दो देवतैकं तत्तद्रूपो हरिः परः ॥ ६ ॥

प्रणवेन स्वनाम्ना च भूधरेण परात्मना ।
सर्वज्ञसर्वशक्तिभ्यां षडङ्गानि विदो विदुः ॥ ७ ॥

ज्ञानैश्वर्यप्रभानन्दतेजःशक्तिभिरेव वा ।
पूर्णात्ममध्यगैः सर्ववैष्णवाङ्गान्यथो विदुः ॥ ८ ॥

तिष्ठोदादिः स्वजायायाः कारणं स्वाहया युतः ।
श्रीकरोऽष्टाक्षरो मन्त्रो गरुडारूढसंस्मृतिः ॥ ९ ॥

द्विर्भीषय त्रासय च प्रमर्दय तथैव च ।
प्रध्वंसयाथो रक्षेति पञ्चाङ्गश्चेदुदाहृतः ॥ १० ॥

क्रूरं वीरं वृहद्विष्णुं दीप्यन्तं विश्वतोमुखम् ।
पुंमृगेन्द्रं भयकरं शुभं मृत्योश्च मारकम् ।
नमामि स्वयमित्येष द्वात्रिंशार्णो मनुर्हरेः ॥ ११ ॥

द्विर्जयस्योपरि निजं सोद्देशं सर्ववित्तथा ।
महातेजो बलं वीर्यं तादृशं स्वाहया युतम् ।
चतुर्विंशाक्षरो मन्त्रो निखिलेष्टप्रदायकः ॥ १२ ॥

विद्महे धीमहे पूर्वं स्वयं चैव महाबलः ।
प्रेरयेत्तन्न इत्येतन्मध्येऽनन्तः प्रकीर्तितः ॥ १३ ॥

पादैर्व्यस्तैः समस्तैश्च पदैश्चाङ्गं प्रकीर्तितम् ।
पूर्वयोस्तत्र पूर्वं तु सर्वज्ञेन षडङ्गकम् ।
तृतीयं तु द्विरावृत्तैः पादैरङ्गसमन्वितम् ॥ १४ ॥

ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रं
जानुप्रसक्तकरयुग्ममथापराभ्याम् ।
चक्रं दरं च दधतं प्रियया समेतं
तिग्मांशुकोट्यधिकतेजसमग्रशक्तिम् ॥ १५ ॥

सर्वेष्वपि हि मन्त्रेषु ध्याद्यनन्तान्तबाहुकः ।
चेतनान्तस्थमारभ्य सर्वगान्तस्थ(स्व)रूपवान् ॥ १६ ॥

अनन्तरूपो ध्येयोऽत्र स्वगुरूक्तानुसारतः ।
यथायोग्यं यथाशक्ति तत्तदायुधभूषणः ॥ १७ ॥

शङ्खचक्रगदापद्मखड्गखेटाः सशार्ङ्गकाः ।
शरो मुसलवज्रौ च हलः पाशाङ्कुशौ तथा ॥ १८ ॥

शूलं च भिण्डिपालश्च पट्टिशोऽग्निर्वराभये ।
तर्कमुद्राऽक्षमाला च पुस्तकं च विदारणम् ।
इत्यादीन्यखिलान्येव विष्णोश्चिन्त्यानि बाहुषु ॥ १९ ॥

वियत्स इति युग्मार्णो विपरीतश्च स स्मृतः ।
स सर्गहीनो वेतश्च बिन्दुहीनोत्तरस्तथा ॥ २० ॥

त्रय एते महामन्त्राः पुरुषार्थचतुष्टये ।
कल्पवृक्षाः प्रिया विष्णोर्विशेषज्ञानदायकाः ॥ २१ ॥

तैरेव तु द्विरावृत्तैरङ्गमेषां प्रकीर्त्तितम् ।
श्वासरूपो जपो नित्यमुभयोर्विद्वदङ्गयोः ॥ २२ ॥

एकविंशत्सहस्रात्मा सषट्शतमहर्निशम् ।
अर्पणीयो हरौ नित्यं प्रातर्योगो महानयम् ॥ २३ ॥

अशेषदोषदहनस्तत्त्वज्ञानप्रदायकः ।
अष्टैश्वर्यप्रदश्चैव कृतादौ समुपासताम् ।
तारयोगोऽप्येवमेव ब्रह्मादावेव वर्तते ॥ २४ ॥

ध्यायेद् रवीन्दुकरमिन्दुसहस्रलक्ष-
कान्तिं प्रियासहितमास्थितमिन्दुबिम्बे ।
शङ्खारिदोर्द्वयमुदर्कमहेन्दुबिम्बात्
संसिच्यमानममृतेन रमाधिनाथम् ॥ २५ ॥

अन्त्यस्य रक्तवर्णो वा ध्येयो विष्णुः सनातनः ।
विद्युद्वर्णोऽथवा ध्येयः शक्त्येतः पञ्चमन्त्रयुक् ॥ २६ ॥

अष्टाक्षरो महामन्त्रः तैरेवाङ्गैः समन्वितः ।
अन्त्यध्यानयुतश्चैव निःशेषपुरुपार्थदः ॥ २७ ॥

मूलं नः प्रतिषेधश्च सोद्देशो भगवानपि ।
विष्णुर्भोज्याधिपः स्वाहायुक्तोऽष्टादशवर्णकः ॥ २८ ॥

अङ्गानि तत्पदैरेव मन्त्रचिन्तामणिस्त्वयम् ।
यथेष्टभक्षभोज्यादिदाता मुक्तिप्रदायकः ॥ २९ ॥

ध्यायेत् सुशुक्लमरविन्ददलायताक्षं
सौवर्णपात्रदधिभोज्यमथामृतं च ।
दोर्भ्यां दधानमखिलैश्च सुरैः समेतं
शीतांशुमण्डलगतं रमया समेतम् ॥ ३० ॥

अमृतं स्वयमुद्देशयुक्तः सहृदयो मनुः ।
सतारोऽष्टाक्षरोऽङ्गानि पदैर्व्यस्तैः समस्तकैः ॥ ३१ ॥

उद्यद्रविप्रभमरीन्द्रदरौ गदां च
ज्ञानं च विभ्रतमजं प्रियया समेतम् ।
विश्वावकाशमभितः प्रतिभासयन्तं
भासा स्वया स्मरत विष्णुमजादिवन्द्यम् ॥ ३२ ॥

त्रिविक्रमस्तु सोद्देशो विश्वरूपश्च तत्परः ।
धीविदौ च महे विष्णुस्तन्नः प्रेरणमध्यगः ॥ ३३ ॥

स्वयमुद्देशसंयुक्तः तदाद्यर्णपुरःसरः ।
सनतिः षडक्षरो मन्त्रो वर्णैरङ्गक्रिया मता ॥ ३४ ॥

अङ्गारवर्णमभितोऽण्डबहिःप्रभाभि-
र्व्याप्तं परश्वधधनुर्धरमेकवीरम् ।
ध्यायेदजेशपुरुहूतमुखैस्तुवद्भि-
रावीतमात्मपदवीं प्रतिपादयन्तम् ॥ ३५ ॥

वियत्स इति युग्मार्णो विपरीतश्च स स्मृतः ।
स सर्गहीनो वेतश्च विन्दुहीनोत्तरस्तथा ॥ २० ॥

त्रय एते महामन्त्राः पुरुषार्थचतुष्टये ।
कल्पवृक्षाः प्रिया विष्णोर्विशेषज्ञानदायकाः ॥ २१ ॥

तैरेव तु द्विरावृत्तैरङ्गमेषां प्रकीर्त्तितम् ।
श्वासरूपो जपो नित्यमुभयोर्विद्वदङ्गयोः ॥ २२ ॥

एकविंशत्सहस्रात्मा सपट्शतमहर्निशम् ।
अर्पणीयो हरौ नित्यं प्रातर्योगो महानयम् ॥ २३ ॥

अशेषदोषदहनस्तत्त्वज्ञानप्रदायकः ।
अष्टैश्वर्यप्रदश्चैव कृतादौ समुपासताम् ।
तारयोगोऽप्येवमेव ब्रह्मादावेव वर्तते ॥ २४ ॥

ध्यायेद् रवीन्दुकरमिन्दुसहस्रलक्ष-
कान्तिं प्रियासहितमास्थितमिन्दुविम्वे ।
शङ्खारिदोर्द्वयमुदर्कमहेन्दुविम्वात्
संसिच्यमानममृतेन रमाधिनाथम् ॥ २५ ॥

अन्त्यस्य रक्तवर्णो वा ध्येयो विष्णुः सनातनः ।
विद्युद्वर्णोऽथवा ध्येयः शक्त्येतः पञ्चमन्त्रयुक् ॥ २६ ॥

अष्टाक्षरो महामन्त्रः तैरेवाङ्गैः समन्वितः ।
अन्त्यध्यानयुतश्चैव निःशेषपुरुषार्थदः ॥ २७ ॥

मूलं नः प्रतिषेधश्च सोद्देशो भगवानपि ।
विष्णुर्भोज्याधिपः स्वाहायुक्तोऽष्टादशवर्णकः ॥ २८ ॥

अङ्गानि तत्पदैरेव मन्त्रचिन्तामणिस्त्वयम् ।
यथेष्टभक्षभोज्यादिदाता मुक्तिप्रदायकः ॥ २९ ॥

ध्यायेत् सुशुक्लमरविन्ददलायताक्षं
सौवर्णपात्रदधिभोज्यमथामृतं च ।
दोर्भ्यां दधानमखिलैश्च सुरैः समेतं
शीतांशुमण्डलगतं रमया समेतम् ॥ ३० ॥

अमृतं स्वयमुद्देशयुक्तः सहृदयो मनुः ।
सतारोऽष्टाक्षरोऽङ्गानि पदैर्व्यस्तैः समस्तकैः ॥ ३१ ॥

उद्यद्रविप्रभमरीन्द्रदरौ गदां च
ज्ञानं च विभ्रतमजं प्रियया समेतम् ।
विश्वावकाशमभितः प्रतिभासयन्तं
भासा स्वया स्मरत विष्णुमजादिवन्द्यम् ॥ ३२ ॥

त्रिविक्रमस्तु सोद्देशो विश्वरूपश्च तत्परः ।
धीविदौ च महे विष्णुस्तन्नः प्रेरणमध्यगः ॥ ३३ ॥

स्वयमुद्देशसंयुक्तः तदाद्यर्णपुरःसरः ।
सनतिः षडक्षरो मन्त्रो वर्णैरङ्गक्रिया मता ॥ ३४ ॥

अङ्गारवर्णमभितोऽण्डबहिःप्रभाभि-
र्व्याप्तं परश्वधधनुर्धरमेकवीरम् ।
ध्यायेदजेशपुरुहूतमुखैस्तुवद्भि-
रावीतमात्मपदवीं प्रतिपादयन्तम् ॥ ३५ ॥

श्यामं रवीन्द्वमितदीधितिकान्तियुक्तं
ज्ञानं शरं च दधतं प्रियया समेतम् ।
स्वात्मस्वरूपममितं हनुमन्मुखेषु
सन्दर्शयन्तमजितं स्मरतोरुगीर्भिः ॥ ३६ ॥

निजगोत्रं तु सोद्देशं पूर्वाक्षरपुरःसरम् ।
नत्यन्तं तारपूर्वं च मनुरष्टाक्षरो मतः ॥ ३७ ॥

ते च बीजे बीजभूते धर्मादीनामशेषतः ।
एते विजयदा मन्त्रा ज्ञानमोक्षप्रदायकाः ।
हिरण्यरत्नराज्यादिसमभीष्टसुरद्रुमाः ॥ ३८ ॥

कृष्णो गोविच्च कामेतः सोद्देशो वल्लवीजनः ।
प्रियश्च तादृशः स्वाहायुगष्टादशवर्णकः ।
पदैरङ्गानि सम्प्रीतिकाममोक्षप्रदो मनुः ॥ ३९ ॥

ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं
सौन्दर्यसारमरिशङ्खवराभयानि ।
दोर्भिर्दधानमजितं सरसं च भौष्मी-
सत्यासमेतमखिलप्रदमिन्दिरेशम् ॥ ४० ॥

सकामः स्वयमुद्देशी नत्यन्तोऽयं षडक्षरः ।
तदादिरपि सर्वेष्टचिन्तामणिरुदाहृतः ॥ ४१ ॥

दृष्टार्थ एव मन्त्राणां कलौ वीर्यं तिरस्कृतम् ।
तत्राप्युद्दीप्तवीर्या हि मन्त्रा अत्र प्रकीर्तिताः ।
वासिष्ठवृष्णिप्रवरमन्त्रास्तत्रापि वीर्यदाः ॥ ४२ ॥

स्वयं वेदपदारूढः पूर्ववर्णपुरःसरः ।
नत्यन्तोऽष्टाक्षरो मन्त्रः प्रियो विज्ञानगोपतेः ॥ ४३ ॥

व्याख्याश्रीसर्वविज्ञानकवितादिगुणप्रदः ।
वादे विजयदो नित्यं यथा युद्धे नृकेसरी ॥ ४४ ॥

विज्ञानरोचिः परिपूरितान्तर्बाह्याण्डकोशं हरितोपलाभम् ।
तर्काभियेतं विधिशर्वपूर्वगीर्वाणविज्ञानदमानतोऽस्मि ॥ ४५ ॥

ज्ञानानन्दपुरः पूर्णो विद्महे धीमहे तथा ।
तन्नः प्रेरणमध्ये तु व्यासो मन्त्राधिपाधिपः ॥ ४६ ॥

आदिबीजं स्थिरादोपज्ञानबीजं विमुक्तिदम् ।
सर्वपापक्षयकरं सर्वव्याधिविनाशनम् ॥ ४७ ॥

ध्यायेच्छशाङ्कशतकोट्यतिसौख्यकान्तिं
संसिच्यमानममृतोरुघटैः सुरेशैः ।
वर्णाभिमानिभिरजेशमुखैः सहैव
पञ्चाशता प्रतिगिरन्तमशेषविद्याः ॥ ४८ ॥

सोद्देशस्तु स्वयं दीर्घपूर्वार्णाद्यो नमोयुतः ।
सर्वविद्याप्रदोऽष्टार्णः प्रतिवादिजयप्रदः ।
विमुक्तिसाधनः कीर्तिबुद्धिस्थैर्यप्रदः सदा ॥ ४९ ॥

वन्दे तुरङ्गवदनं शशिबिम्बसंस्थं
चन्द्रावदातममृतात्मकरैः समन्तात् ।
अण्डान्तरं बहिरपि प्रतिभासयन्तं
शङ्खाक्षपुस्तकसुबोधयुताब्जबाहुम् ॥ ५० ॥

नस्तो मुखादपि निरन्तरमुद्गिरन्तं
विद्या अशेषत उताब्जभवेशमुख्यैः ।
संसेव्यमानमतिभक्तिभरावनम्रै-
र्लक्ष्म्याऽमृतेन सततं परिषिच्यमानम् ॥ ५१ ॥

स्वयमुद्देशवान्पूर्ववर्णपूर्वो नमोयुतः ।
सतारोऽष्टाक्षरश्चैव नवार्णश्च मनू स्मृतौ ॥ ५२ ॥

प्रोद्यद्दिवाकरसमानतनुं सहस्र-
सूर्योरुदीधितिभिराप्तसमस्तलोकम् ।
ज्ञानाभयाङ्कितकरं कपिलं च दत्तं
ध्यायेदजादिसमितिं प्रति वोधयन्तम् ॥ ५३ ॥

अधृष्यताज्ञानमोक्षप्रदौ भक्तेष्विमौ सदा ।
सूक्तं दीर्घतमोदृष्टं 'विष्णोर्नु कम्' इति प्रभोः ॥ ५४ ॥

सर्वार्थदं गार्त्समदं 'यो जात' इति चापरम् ।
वासिष्ठं च 'परो मात्रया' इति ज्ञानविमुक्तिदम् ॥ ५५ ॥

भौवनीयं सर्वकाममोक्षदं य इमेत्यपि ।
एवमेवाखिला वेदा ज्ञातव्या विष्णुतत्पराः ॥ ५६ ॥

स्वदृष्टं सूक्तमखिलकामदं हरितुष्टिदम् ।
वाचोऽम्भृण्याः श्रियोऽङ्गानि श्रीर्लक्ष्मीर्मेन्दिरा रमा ॥ ५७ ॥

कौशेयपीतवसनामरविन्दनेत्रां
पद्मद्वयाभयवरोद्यतपद्महस्ताम् ।

उद्यच्छतार्कसदृशीं परमाङ्कसंस्थां
ध्यायेद्विधीशनुतपादयुगां जनित्रीम् ॥ ५८ ॥

लज्जावीजं च तद्वीजं तस्या एवाभिधायकम् ।
पाशाङ्कुशौ रक्तवस्त्रे लज्जावीजे विशिष्यते ॥ ५९ ॥

अमध्ययुग्मस्वरगतेनैवाङ्गमुदाहृतम् ।
सत्तावीजं च दुर्वीजं तद्वदेव प्रकीर्तितम् ॥ ६० ॥

वर्णः श्यामो विशेषोऽत्र ताम्बूलं नीलमुत्पलम् ।
शङ्खचक्रौ तर्जनश्च शूलमित्यपरत्र च ॥ ६१ ॥

नमोऽन्तः स्वेन सहितस्तदेवान्यो मनुः स्मृतः ।
दुर्गा त्रिष्टुप् कश्यपोक्ता तत्र वर्णोऽग्निवत् स्मृतः ॥ ६२ ॥

त्रिनेत्रत्वं च दुर्गायाः प्रायः सर्वत्र कथ्यते ।
पादैः समस्तेन तथा षड्वर्णेनाङ्गमुच्यते ॥ ६३ ॥

रमाया एव रूपाणि त्वेतानि हि विदो विदुः ।
मुख्यतो जामदग्न्यस्तु देवताऽस्य मनोः स्मृतः ॥ ६४ ॥

हिरण्यगर्भसूक्तं च भृगुदृष्टं प्रकीर्तितम् ।
व्रह्मधातृविरिञ्चाजपाद्मैरङ्गमुदाहृतम् ॥ ६५ ॥

ध्यायेन्निषण्णमजमच्युतनाभिपद्मे
प्रोद्यद्दिवाकरसमूहनिकाशमग्रम् ।
मातृप्रकारकरमुत्तमकान्तिमद्भि-
र्वक्त्रैः सृजन्तमखिलैः परमार्थविद्याः ॥ ६६ ॥

स्वयमुद्देशनतिमांस्तस्य पञ्चाक्षरो मनुः ।
स्वयमेवापरोऽष्टार्णस्तादृशः सम्प्रकीर्तितः ॥ ६७ ॥

वळाद्यं भृगुणा दृष्टं प्राणाग्नेः सूक्तमुच्यते ।
प्राणाद्यैः पञ्चभिस्तस्याप्यङ्गान्युक्तानि सूरिभिः ॥ ६८ ॥

उद्यद्रविप्रकरसन्निभमच्युताङ्के
स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिम् ।
ध्यायेद्गदाभयकरं सुकृताञ्जलिं तं
प्राणं यथेष्टतनुमुन्नतकर्मशक्तिम् ॥ ६९ ॥

प्राणाद्याः पञ्चमन्त्राश्च तस्य देवस्य वाचकाः ।
उच्यते हरिरप्येतैः साक्षान्नारायणादिकः ॥ ७० ॥

ब्रह्माण्या अपि भारत्या गौरीर्यस्त इति श्रुतौ ।
मन्त्रौ दीर्घतमोदृष्टौ सर्वाभीष्टप्रदायकौ ॥ ७१ ॥

उद्यद्दिवाकरसमूहनिभां स्वभर्तु-
रङ्कस्थितामभयसद्वरबाहुयुग्माम् ।
मुद्रां च तत्त्वदृशये वरपुस्तकं च
दोर्युग्मकेन दधतीं स्मरताऽत्मविद्याम् ॥ ७२ ॥

पादैर्व्यस्तैः समस्तैश्च तदङ्गानि विदो विदुः ।
स्वयमुद्देशनत्यन्तौ मन्त्रौ द्वावपरौ तयोः ॥ ७३ ॥

मन्त्रा ह्येते हरेः प्रीतिदायकाः सर्वकामदाः ।
इष्टं दैवं हरिः साक्षाल्लक्ष्मीर्भाग्यस्य देवता ।
गुरुर्ब्रह्माऽथ वायुर्वा विद्या देव्यौ प्रकीर्तिते ॥ ७४ ॥

तस्मादेते प्रिया विष्णोरन्तरङ्गतया सदा ।
ज्ञेयाश्चैव प्रपूज्याश्च विष्णोः प्रीतिमभीप्सता ॥ ७५ ॥

उद्देशनतियुङ्मन्त्रः स्वयमेव शिवस्य तु ।
वर्णैरेतैस्तदङ्गानि वामदेवो मुनिः स्मृतः ।
पङ्क्तिशब्दार्थविज्ञाने न हि छन्दसि संशयः ॥ ७६ ॥

ध्येयः पञ्चमुखो रुद्रः स्फटिकामलकान्तिमान् ।
विद्युच्छुभ्रासितरजःश्यामान्यस्य मुखानि च ।
जटावबद्धेन्दुकलः प्रियायुङ्नागभूषणः ॥ ७७ ॥

मन्त्रेष्वेतेषु सर्वेषु वाच्यस्तारेण केशवः ।
अन्तर्यामितया ध्येयः सर्वदेवेषु सर्वदा ॥ ७८ ॥

स एव वनितालिङ्गः पार्वत्या मनुरुच्यते ।
गौरी वराभयकरा ध्येया पीताम्बरा च सा ॥ ७९ ॥

स्वयमुद्देशनत्यन्तः पूर्वपूर्वः षडक्षरः ।
सनत्कुमारदृष्टोऽयं मन्त्रः शेषस्य कामदः ॥ ८० ॥

दधानो हलसौनन्दौ श्वेतवर्णः कृताञ्जलिः ।
सहस्रमूर्धाऽद्वितीयकर्णभूषः प्रियायुतः ।
वनमाली नीलवासा ध्येयो विष्णोस्तु पृष्ठतः ॥ ८१ ॥

व्यत्यस्तपक्षितारौ च स्वाहान्तो गारुडो मनुः ।
कश्यपोऽस्य मुनिर्ध्येयः सुधापूर्णं हिरण्मयम् ॥ ८२ ॥

दधानः कुम्भमभयं पीतशुक्लोऽरुणो हरिः ।
कृष्णश्चाजानुतो नाभेः कण्ठात् कादन्त एव च ॥ ८३ ॥

प्रियायुक् पुरतो विष्णोः पक्षतुण्डसमन्वितः ।
जङ्गमस्थावरविषहृदयं सर्वकामदः ॥ ८४ ॥

मन्त्राश्च लोकपालानां नमोऽन्ताः सर्वकामदाः ।
पीतरक्तासितश्वेतरक्तशुक्लाश्च वर्णतः ॥ ८५ ॥

सप्रियाः साभया वज्रशक्तिदण्डासिपाशिनः ।
गदाकुमुदशूलेष्टखड्गिनो भूपणोज्वलाः ॥ ८६ ॥

अग्निश्च स्वयमुद्देशी सनमः स्कन्दवाचकः ।
कौशिकोऽस्य मुनिर्वह्निवर्णः षण्मुख उज्ज्वलः ।
धनुःशक्तिधरो ध्येयः कामदो भयनाशनः ॥ ८७ ॥

ह्रस्वः कृपालुः सेतश्च स्वयमन्यः स्वयं तथा ।
सतारोऽष्टाक्षरः सौरः क्रमव्युत्क्रमतः पदैः ॥ ८८ ॥

अङ्गानि पद्मयुगलधरो ध्येयोऽरुणो रविः ।
सर्वव्याधिहरः श्रीदो वृष्टिदोऽयं मनुः स्मृतः ॥ ८९ ॥

मोनयदासाप्रप्रक्षि व्यत्यस्तो विघ्नराण्मनुः ।
रक्ताम्वरो रक्ततनू रक्तमाल्यानुलेपनः ॥ ९० ॥

महोदरो गजमुखः पाशदन्ताङ्कुशाभये ।
विभ्रद्ध्येयो विघ्नहरः कामदस्त्वरया ह्ययम् ॥ ९१ ॥

तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रवोधयन् ।
एक एव महाशक्तिः कुरुते सर्वमञ्जसा ॥ ९२ ॥

स्वयमुद्देशवान् पूर्वपूर्वो हृदयसंयुतः ।
धान्वन्तरो महामन्त्रः संसृतिव्याधिनाशनः ।
अत्रोक्तसर्वमन्त्राणां नायकोपलसन्निभः ॥ ९३ ॥

चन्द्रौघकान्तिममृतात्मकरैर्जगन्ति
सञ्जीवयन्तममितात्मसुखं परेशम् ।
ज्ञानं सुधाकलशमेव च सन्दधानं
शीतांशुमण्डलगतं स्मरताऽत्मसंस्थम् ॥ ९४ ॥

मूर्ध्नि स्थितादमुत एव सुधां स्रवन्तीं
भ्रूमध्यगाच्च तत एव च तालुसंस्थात् ।
हार्दाच्च नाभिसदनादधरस्थिताच्च
ध्यात्वाऽभिपूरिततनुर्दुरितं निहन्यात् ॥ ९५ ॥

अज्ञानदुःखभयरोगमहाविषाणि
योगोऽयमाशु विनिहन्ति सुखं च दद्यात् ।
उन्मादविभ्रमहरः परतश्च सान्द्र-
स्वानन्दमेवपदमापयति स्म नित्यम् ॥ ९६ ॥

ध्यात्वैव हस्ततलगं स्वमृतं स्रवन्तं
देवं स यस्य शिरसि स्वकरं निधाय ।
आवर्तयेन्मनुमिमं स च वीतरोगः
पापादपैति मनसा यदि भक्तिनम्रः ॥ ९७ ॥

शतं सहस्रमयुतं लक्षं वाऽऽरोगसंक्षयात् ।
इममेव जपेन्मन्त्रं साधूनां दुःखशान्तये ॥ ९८ ॥

ज्वरदाहादिशान्त्यर्थं तर्पयेन्मनुनाऽमुना ।
ध्यात्वा हरिं जले सप्तरात्राज्जूर्तिर्विनश्यति ॥ ९९ ॥

अयुतामृतसमिद्धोमाद् गोघृतक्षीरसंयुतात् ।
सर्वे रोगा विनश्यन्ति विमुखो न हरेर्यदि ॥ १०० ॥

भूताभिचारशान्त्यर्थमपामार्गाहुतिक्रिया ।
द्विगुणाऽमृतया पश्चात्केवलेन घृतेन वा ॥ १०१ ॥

आयुर्विवृद्धये नित्यं जन्मनक्षत्र एव वा ।
चतुश्चतुर्भिर्दूर्वाभिः क्षीराज्याक्ताभिरिष्यते ॥ १०२ ॥

सर्वक्रिया हरौ भक्ते हरिभक्तैः स्वनुष्ठिताः ।
गुरुभक्तैः सदाचारैः फलन्त्यद्धा न चान्यथा ॥ १०३ ॥

ब्रह्मान्ता गुरवश्चैव सम्प्रदायप्रवर्तकाः ।
तत्तद्गुणानुसारेण पूज्या मान्याश्च कृत्स्नशः ॥ १०४ ॥

सर्वेभ्योऽभ्यधिका भक्तिर्विष्णौ स्यादतिनिश्चला ।
लक्ष्मीब्रह्मादिषु ततः क्रमेण स्यात्सुभाविता ।
एवं विद्याः फलिष्यन्ति नान्यथा तु कथञ्चन ॥ १०५ ॥

शुभान् ध्यायन्ति ये कामान् गुरुदेवप्रसादजान् ।
इतरानात्मपापोत्थांस्तेषां विद्या फलिष्यति ॥ १०६ ॥

मुक्तावपि च संसारे नात्मनो विष्णुतां क्वचित् ।
ब्रह्मरुद्रादिभावं वा साम्यं वाऽऽधिक्यमेव वा ॥ १०७ ॥

अतद्वशत्वमथवा यः स्मरेत्स तु सिद्धिभाक् ।
नान्यथा सिद्धिमाप्नोति कल्पकोटिशतैरपि ॥ १०८ ॥

स्मृत्वा गुरुं पूर्वगुरुमादिमूलगुरू तथा ।
देवतां वासुदेवं च विद्याभ्यासी तु सिद्धिभाक् ॥ १०९ ॥

अवज्ञाता गुरूणां च देवतानां न सिद्ध्यति ।
प्रयाति च तमो घोरं मन्त्रावज्ञाकृदेव च ॥ ११० ॥

यस्तारतम्यवेत्ता स्याद्गुरूणां देवतास्वपि ।
भक्तिमान् गुरुदेवेषु तद्भक्तेषु च सिद्ध्यति ॥ १११ ॥

गुरुदेवप्रतीपानां विमुखस्तत्प्रिये रतः ।
अकामक्रोधलोभश्च न चिरात् सिद्धिमाप्नुयात् ॥ ११२ ॥

सकामेभ्योऽमितगुणा ह्यकामैस्तु कृताः क्रियाः ।
तस्मादकाम एवालं भजेद्विष्णुं सनातनम् ॥ ११३ ॥

अयं मे हस्त इति च मन्त्रः पूर्वोक्तवत्स्मृतः ।
अत्रोक्तास्तु क्रियाः सर्वमन्त्रेष्वप्युपलक्षणम् ॥ ११४ ॥

विजयस्तम्भनादीनि नारसिंहैर्विशेषतः ।
जामदग्न्यैश्च कार्याणि राघवैर्यादवैरपि ।
वाराहैः स्तम्भनं क्षिप्रं श्रीकराः कथिताः पुरा ॥ ११५ ॥

वहुवाहुं महाकायमुद्युक्तं चोद्यतायुधम् ।
स्मरन् विजयमाप्नोति स्तम्भनादींश्च कारयेत् ॥ ११६ ॥

वसुपूर्णकरं रत्नपर्वतस्थं विभावयन् ।
वसुसिद्धिमवाप्नोति सेव्यमानमजादिभिः ।
श्रिया विभूतिभिर्युक्तं भावयन् भूतिमाप्नुयात् ॥ ११७ ॥

यद्यन्मनोगतं तस्य तत्तदाप्नोत्यसंशयम् ।
तथा तथा हरिं ध्यायन् क्रियास्तास्ताश्च साधयन् ॥ ११८ ॥

श्रिये पद्मानि जुहुयात्सम्प्रीत्या उत्पलानि च ।
शरान् जयाय जुहुयादभिमन्त्र्य प्रयोजयेत् ॥ ११९ ॥

विद्यायै मन्त्रितं वारि वचां वा तुलसीमपि ।
ब्राह्मीं घृतं सुवर्णं वा शतावृत्त्या तु नित्यशः ॥ १२० ॥

अकुर्वंश्च क्रिया भक्त्या निरपेक्षो भजन् हरिम् ।
सर्वमेतदवाप्नोति विशेषेण न संशयः ॥ १२१ ॥

सृष्टिस्थितिलयन्यासाः प्रातिलोम्यानुलोमतः ।
स्थित्यन्ता एव वर्णानां श्रेष्ठा एव चतुर्दश ।
संहृत्यन्ता मोक्षिणां च एकविंशतिरेव वा ॥ १२२ ॥

पादहृत्केषु नाभ्यास्ययुक्तं च सललाटकम् ।
सनासिकादृग्जान्वोश्च सश्रोत्रं सोरुकं तथा ॥ १२३ ॥

सोरस्कश्च सकण्ठं च सभुजद्वयमेव च ।
सगण्डयुग्मं सालीकं सतुण्डक्रोडकं तथा ॥ १२४ ॥

समूलं च सगुह्यं च सपार्श्वद्वयमेव च ।
सदोर्द्वयं व्यापकं च गलपार्श्वद्वयेन च ॥ १२५ ॥

ककुत्स्तनद्वयेनापि पृष्ठमूलेन सर्वशः ।
न्यासो यथाक्रमं प्रोक्तो मन्त्रेष्वेतेषु कृत्स्नशः ॥ १२६ ॥

प्रतिमायामात्मनि च न्यासोऽयं सन्निधानकृत् ।
वीजान्तःसाध्यमध्यं च विभक्तदलमन्त्रयुक् ॥ १२७ ॥

वर्णानुप्रातिलोम्येन वृत्तं भूपुरसंयुतम् ।
वीजसन्दब्धकोणं च यन्त्रं रक्षादिसाधकम् ॥ १२८ ॥

समं तत्सर्वमन्त्रेपु जप्तं धार्यं तु वा भुवि ।
विलिख्य मण्डले वा तत्पूजयेद्धरिमञ्जसा ॥ १२९ ॥

प्रतिमालक्षणैर्यावद्युक्त आचार्य उत्तमः ।
सर्ववित्तपसा युक्त आज्ञाशक्तियुतो हरेः ॥ १३० ॥

यावद्भक्तो यथालब्धैर्गुणैर्युक्तोऽथ वैष्णवः ।
गुरुः सत्सम्प्रदायज्ञस्तारतम्येन सिद्धिदः ॥ १३१ ॥

उत्तमादुत्तमा सिद्धिर्धर्ममोक्षादिषु स्फुटम् ।
तस्मादुत्तम आचार्ये लब्धे नातोऽवरं व्रजेत् ॥ १३२ ॥

एकस्य शिष्यतां प्राप्य तदाज्ञां न विना समम् ।
अवरं वा व्रजेदुच्चगुणश्चेन्नैव दुष्यति ॥ १३३ ॥

विशेषतो गुणश्च स्याद्देवेष्वप्येवमेव हि ।
तस्मादुत्तममाचार्यं देवेशं चाऽश्रयेद्धरिम् ॥ १३४ ॥

अपरोक्षदृशेरेव यस्मान्मोक्षो न चान्यथा ।
अपरोक्षदृशिश्चैव श्रवणान्मननादनु ।
सम्यङ्निश्चिततत्त्वस्य निदिध्यासनया भवेत् ॥ १३५ ॥

द्विविधा सा च सम्प्रोक्ता विष्णुशास्त्रावमर्शनम् ।
एकं ध्यानं हरेरन्यच्चत्वार्यङ्गानि तस्य च ।
यमश्च नियमश्चाऽसा प्राणायाम इतीरितः ॥ १३६ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमाः शौचं तपस्तुष्टिः स्वाध्यायो हरिपूजनम् ।
नियमा वीरपद्मे च स्वस्तिकाद्यानि चासनम् ॥ १३७ ॥

रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्मृतः ।
प्राणायामः स्मृतिं विष्णोर्विना नियम उच्यते ॥ १३८ ॥

अधीतिस्मृतियुक्तस्तु निदिध्यासनमेव हि ।
प्राणायामे च विष्णोर्यत्स्मरणं ध्यानमेव तत् ॥ १३९ ॥

आसा शौचं प्राणयामो निष्परिग्रहपूर्वकाः ।
तप आद्याः क्रमात्सर्व उत्तरोत्तरतोऽधिकाः ।
सर्वस्माच्छ्रवणाद्यास्तु मुख्या मुक्तिप्रसाधने ॥ १४० ॥

अज्ञस्य श्रवणं श्रेष्ठमयुक्तेर्मननं तथा ।
ध्यानं निश्चिततत्त्वस्य तस्माच्छास्त्रावमर्शनम् ॥ १४१ ॥

वरं दशगुणं तस्माद् व्याख्यैकस्य शतोत्तरा ।
अपरोक्षदृशाऽप्येपा कर्तव्या विष्णुतुष्टिदा ॥ १४२ ॥

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ १४३ ॥

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ १४४ ॥

शौचासने त्वङ्गमात्रं न पृथग्धर्मकारणम् ।
प्राणायामादयस्तुष्टिपर्यन्ता द्विगुणाधिकाः ॥ १४५ ॥

स्वाध्यायोऽतः कोटिगुणस्ततोऽनन्तगुणा हरेः ।
पूजातस्त्रिगुणं ध्यानमिति धर्मक्रमः स्मृतः ॥ १४६ ॥

ऊर्वोरधः पदोरूर्ध्वं विभागेनेति च त्रिधा ।
आसनत्रयमुद्दिष्टं मन्त्रस्मरणपूर्वकम् ॥ १४७ ॥

द्विगुणोत्तरं रेचकादि पोडशादिक्रमेण तु ।
मात्राणां ह्रस्ववर्णस्य कालो मात्रेति शब्द्यते ॥ १४८ ॥

क्रमेणैवाभ्यसेन्मात्रावृद्धिमेकाग्रधीः पुनः ।
रेचयित्वा दक्षिणतः पूरयित्वा च वामतः ।
कुम्भकश्च सुषुम्नायां विष्णुं वायुं च संस्मरेत् ॥ १४९ ॥

मूलाधारं समारभ्य त्वामूर्धानमृजुस्थिता ।
मध्ये सुषुम्ना विज्ञेया वज्रिकाऽऽर्या प्रकाशिनी ॥ १५० ॥

वैद्युता ब्रह्मनाडीति सैव पञ्चप्रभेदिनी ।
पृष्ठवामाग्रदक्षान्तर्भेदास्तेषु क्रमेण तु ॥ १५१ ॥

हरिर्नीलः सितः पिङ्गो लोहितश्चात्र केशवः ।
प्रद्युम्नादिस्वरूपेण ध्येयः सिद्धिमभीप्सता ॥ १५२ ॥

मूले च नाभौ हृदयेन्द्रयोनिभ्रूमध्यमूर्धद्विषडन्तकेषु ।
चतुःषडष्टद्विचतुर्द्विषट्कदलेषु पद्मेषु सितारुणेषु ।
पञ्चात्मकोऽसौ भगवान्सदैव
ध्येयो हृदन्तान्यरुणानि तानि ॥ १५३ ॥

त्रिकोणवह्नौ च षडश्रवायौ
द्विस्तावदश्ररविवृत्तशशित्रिवह्नौ ।
वृत्ते विधावपि विचिन्त्यमिदं दशार्ध-
रूपं सितं तदखिलं हृदयात्परस्थम् ॥ १५४ ॥

इडा च पिङ्गला चैव वज्रिका धारिणी तथा ।
सुषुम्नायाश्चतुर्दिक्षु वज्रिकाद्यासु तत्र च ।
चतुर्मूर्तिः स भगवान् हृदये संव्यवस्थितः ॥ १५५ ॥

द्वासप्ततिसहस्राणि नाड्योऽन्यास्तु प्रधानतः ।
वृहतीसहस्रस्पर्शानामृचां वाच्योऽत्र केशवः ॥ १५६ ॥

रूपाणां लक्षणं तेषां रहस्यत्वान्न कथ्यते ।
विष्णुना ब्रह्मणे प्रोक्तं ग्रन्थसङ्कोचतस्तथा ॥ १५७ ॥

खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते ।
अप्रयत्नात्समाधिश्च दर्शनं चिरयाऽनया ।
अथवा सततं शास्त्रविमर्शेन भविष्यति ॥ १५८ ॥

परमस्नेहसंयुक्तयथार्थज्ञानतो भवेत् ।
सा भक्तिरिति विज्ञेया साधनं भोगमोक्षयोः ॥ १५९ ॥

मुख्यमेपैव नान्यत्स्यात् सर्वं व्यर्थं तया विना ।
सैकाऽप्यभीष्टफलदा मोक्षो दर्शनयुक्तया ॥ १६० ॥

दर्शनं तु तया हीनं व्यर्थमन्यत्किमुच्यते ।
योग्यं तु दर्शनं नैव तया हीनं भविष्यति ॥ १६१ ॥

आनन्दचित्सदितिपूर्वगुणैः समस्तै-
र्मत्यादिभिर्विधिपरैर्भगवान् क्रमेण ।
ध्यातोऽधिकैरधिगुणोऽधिकमेव सौख्यं
मुक्तौ ददाति सततं परमस्वरूपः ॥ १६२ ॥

निर्दोषाखिलसम्पूर्णगुणेन हरिणा स्वयम् ।
ब्रह्मणे कथितात् तन्त्रसारादुद्धृत्य सादरम् ।
आनन्दतीर्थमुनिना कृतो ग्रन्थोऽयमञ्जसा ॥ १६३ ॥

ग्रन्थोऽयं पाठमात्रेण सकलाभीष्टसिद्धिदः ।
किमु ज्ञानादनुष्ठानादुभयस्मात् पुनः किमु ॥ १६४ ॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥१६५॥

अशेपदोपोज्झितपूर्णसद्गुणं सदा विशेपाप(व)गतोरुरूपम् ।
नमामि नारायणमप्रतीपं सदा प्रियेभ्यः प्रियमादरेण ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमत्तन्त्रसारसङ्ग्रहे चतुर्थोऽध्यायः ॥

॥ तन्त्रसारसङ्ग्रहः सम्पूर्णः ॥



## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# नरसिंहनखस्तोत्रम्

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

पान्त्वस्मान् पुरुहूतवैरिबलवन्मातङ्गमाद्यद्घटा-
कुम्भोच्चाद्रिविपाटनाधिकपटुप्रत्येकवज्रायिताः ।
श्रीमत्कण्ठीरवास्यप्रततसुनखरा दारितारातिदूर-
प्रध्वस्तध्वान्तशान्तप्रविततमनसा भाविता नाकिवृन्दैः॥१॥

लक्ष्मीकान्त समन्ततो विकलयन्नैवेशितुस्ते समं
पश्याम्युत्तमवस्तु दूरतरतोऽपास्तं रसो योऽष्टमः ।
यद्रोषोत्करदक्षनेत्रकुटिलप्रान्तोत्थिताग्निस्फुरत्
खद्योतोपमविस्फुलिङ्गभसिता ब्रह्मेशशक्रोत्कराः ॥ २ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम् श्रीनरसिंहनखस्तोत्रम् ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# द्वादशस्तोत्रम्

।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ।।

## प्रथमोऽध्यायः

वन्दे वन्द्यं सदानन्दं वासुदेवं निरञ्जनम् ।
इन्दिरापतिमाद्यादिवरदेशवरप्रदम् ।। १ ।।

नमामि निखिलाधीशकिरीटाघृष्टपीठवत् ।
हृत्तमश्शमनेऽर्काभं श्रीपतेः पादपङ्कजम् ।। २ ।।

जाम्बूनदाम्बराधारं नितम्बं चिन्त्यमीशितुः ।
स्वर्णमञ्जीरसंवीतमारूढं जगदम्बया ।। ३ ।।

उदरं चिन्त्यमीशस्य तनुत्वेप्यखिलम्भरम् ।
वलित्रयाङ्कितं नित्यमुपगूढं श्रियैकया ।। ४ ।।

स्मरणीयमुरो विष्णोरिन्दिरावासमीशितुः ।
अनन्तमन्तवदिव भुजयोरन्तरं गतम् ।। ५ ।।

शङ्खचक्रगदापद्मधराश्चिन्त्या हरेर्भुजाः ।
पीनवृत्ता जगद्रक्षाकेवलोद्योगिनोऽनिशम् ।। ६ ।।

सन्ततं चिन्तयेत्कण्ठं भास्वत्कौस्तुभभासकम् ।
वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽनिशं यतः ।। ७ ।।

स्मरेत यामिनीनाथसहस्रामितकान्तिमत् ।
भवतापापनोदीड्यं श्रीपतेर्मुखपङ्कजम् ।। ८ ।।

पूर्णानन्यसुखोद्भासि मन्दस्मितमधीशितुः ।
गोविन्दस्य सदा चिन्त्यं नित्यानन्दपदप्रदम् ॥ ९ ॥

स्मरामि भवसन्तापहानिदामृतसागरम् ।
पूर्णानन्दस्य रामस्य सानुरागावलोकनम् ॥ १० ॥

ध्यायेदजस्रमीशस्य पद्मजादिप्रतीक्षितम् ।
भ्रूभङ्गं पारमेष्ठ्यादिपददायि विमुक्तिदम् ॥ ११ ॥

सन्ततं चिन्तयेऽनन्तमन्तकाले विशेषतः ।
नैवोदापुर्गृणन्तोऽन्तं यद्गुणानामजादयः ॥ १२ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीद्वादशस्तोत्रे प्रथमोध्यायः ॥



## द्वितीयोऽध्यायः

सुजनोदधिसंवृद्धिपूर्णचन्द्रो गुणार्णवः ।
अमन्दानन्दसान्द्रो नः प्रीयतामिन्दिरापतिः ॥ १ ॥

रमाचकोरीविधवे दुष्टदर्पोदवह्नये ।
सत्पान्थजनगेहाय नमो नारायणाय ते ॥ २ ॥

चिदचिद्भेदमखिलं विधायाधाय भुञ्जते ।
अव्याकृतगृहस्थाय रमाप्रणयिने नमः ॥ ३ ॥

अमन्दगुणसारोऽपि मन्दहासेन वीक्षितः ।
नित्यमिन्दिरयाऽऽनन्दसान्द्रो यो नौमि तं हरिम् ॥ ४ ॥

वशी वशो न कस्यापि योऽजितो विजिताखिलः ।
सर्वकर्ता न क्रियते तं नमामि रमापतिम् ॥ ५ ॥

अगुणाय गुणोद्रेकस्वरूपायादिकारिणे ।
विदारितारिसङ्घाय वासुदेवाय ते नमः ॥ ६ ॥

आदिदेवाय देवानां पतये सादितारये ।
अनाद्यज्ञानपाराय नमो वरवराय ते ॥ ७ ॥

अजाय जनयित्रेऽस्य विजिताऽखिलदानव ।
अजादिपूज्यपादाय नमस्ते गरुडध्वज ॥ ८ ॥

इन्दिरामन्दसान्द्राग्र्यकटाक्षप्रेक्षितात्मने ।
अस्मदिष्टैककार्याय पूर्णाय हरये नमः ॥ ९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीद्वादशस्तोत्रे द्वितीयोऽध्यायः ॥

★★★

## तृतीयोऽध्यायः

कुरु भुङ्क्ष्व च कर्म निजं नियतं हरिपादविनम्रधिया सततम् ।
हरिरेव परो हरिरेव गुरुर्हरिरेव जगत्पितृमातृगतिः ॥ १ ॥

न ततोऽस्त्यपरं जगतीड्यतमं परमात्परतः पुरुषोत्तमतः ।
तदलं बहुलोकविचिन्तनया प्रवणं कुरु मानसमीशपदे ॥ २ ॥

यततोऽपि हरेः पदसंस्मरणे सकलं ह्यघमाशु लयं व्रजति ।
स्मरतस्तु विमुक्तिपदं परमं स्फुटमेष्यति तत्किमपाक्रियते ॥ ३॥

शृणुतामलसत्यवचः परमं शपथेरितमुच्छ्रितबाहुयुगम् ।
न हरेः परमो न हरेः सदृशः परमः स तु
सर्वचिदात्मगणात् ॥ ४ ॥

यदि नाम परो न भवेत्स हरिः कथमस्य वशे जगदेतदभूत् ।
यदि नाम न तस्य वशे सकलं कथमेव तु नित्यसुखं न
भवेत् ॥ ५ ॥

न च कर्मविमामलकालगुणप्रभृतीशमचित्तनु तद्धि यतः ।
चिदचित्तनु सर्वमसौ तु हरिर्यमयेदिति वैदिकमस्ति वचः ॥

व्यवहारभिदाऽपि गुरोर्जगतां
न तु चित्तगता स हि चोद्यपरम् ।
बहवः पुरुषाः पुरपप्रवरो
हरिरित्यवदत्स्वयमेव हरिः ॥ ७ ॥

चतुराननपूर्वविमुक्तगणा हरिमेत्य तु पूर्ववदेव सदा ।
नियतोच्चविनीचतयैव निजां स्थितिमापुरिति स्म परं
वचनम् ॥ ८ ॥

आनन्दतीर्थसन्नाम्ना पूर्णप्रज्ञाभिधायुजा ।
कृतं हर्यष्टकं भक्त्या पठतः प्रीयते हरिः ॥ ९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीद्वादशस्तोत्रे तृतीयोऽध्यायः ॥



## चतुर्थोऽध्यायः

निजपूर्णसुखामितबोधतनुः परशक्तिरनन्तगुणः परमः ।
अजरामरणः सकलार्तिहरः कमलापतिरीड्यतमोऽवतु नः ॥

यदसुप्तिगतोऽपि हरिः सुखवान् सुखरूपिणमाहुरतो निगमाः
स्वमतिप्रभवं जगदस्य यतः परबोधतनुं च ततः खपतिम् ॥

बहुचित्रजगद्बहुधाकरणात्परशक्तिरनन्तगुणः परमः ।
सुखरूपममुष्य पदं परमं स्मरतस्तु भविष्यति तत्सततम् ॥
स्मरणे हि परेशितुरस्य विभोर्मलिनानि मनांसि कुतः करणम् ।
विमलं हि पदं परमं स्वरतं तरुणार्कसवर्णमजस्य हरेः ॥ ४ ॥

विमलैः श्रुतिशाणनिशाततमैः
सुमनोऽसिभिराशु निहत्य दृढम् ।
बलिनं निजवैरिणमात्मतमो-
भिदमीशमनन्तमुपास्व हरिम् ॥ ५ ॥

स हि विश्वसृजो विभुशम्भुपुरन्दरसूर्यमुखानपरानमरान् ।
सृजतीड्यतमोऽवति हन्ति निजं पदमापयति प्रणतान्
सुधिया ॥ ६ ॥

परमोऽपि रमेशितुरस्य समो
न हि कश्चिदभून्न भविष्यति च ।
क्वचिदद्यतनोऽपि न पूर्णसदा-
गणितेड्यगुणानुभवैकतनोः ॥ ७ ॥

इति देववरस्य हरेः स्तवनं कृतवान् मुनिरुत्तममादरतः ।
सुखतीर्थपदाभिहितः पठतस्तदिदं भवति ध्रुवमुच्चसुखम् ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीद्वादशस्तोत्रे चतुर्थोऽध्यायः ॥

★★★

## पञ्चमोऽध्यायः

वासुदेवाऽपरिमेयसुधामन् शुद्धसदोदित सुन्दरि(री)कान्त ।
धराधरधारणवेधुरधर्तः सौधृतिदीधितिवेधृविधातः ॥ १ ॥

अधिक वन्धं रन्धय बोधाच्छिन्धि पिधानं वन्धुरमद्धा ।
केशव केशव शासक वन्दे पाशधरार्चित शूरवरेश ॥ २ ॥

नारायणाऽमलकारण वन्दे कारणकारण पूर्णवरेण्य ।
माधव माधव साधक वन्दे बाधक बोधक शुद्धसमाधे ॥

गोविन्द गोविन्द पुरन्दर वन्दे स्कन्दस(सु)नन्दनवन्दितपाद ।
विष्णो सृजिष्णो ग्रसिष्णो विवन्दे कृष्ण सदुष्णवधिष्णो
सुधृष्णो ॥ ४ ॥

मधुसूदन दानवसादन वन्दे दैवतमोदित वेदितपाद ।
त्रिविक्रम निष्क्रम विक्रम वन्दे सुक्रम सङ्क्रम हुङ्कृतवक्त्र ॥ ५॥

वामन वामन भामन वन्दे सामन सीमन शा(सा)मन सानो ।
श्रीधर श्रीधर शन्धर वन्दे भूधर वार्धर कन्धरधारिन् ॥ ६ ॥

हृषीकेश सुकेश परेश विवन्दे शरणेश कलेश बलेश सुखेश ।

पद्मनाभ शुभोद्भव वन्दे सम्भृतलोकभराभर भूरे ।
दामोदर दूरतरान्तर वन्दे दारितपारगपार परस्मात् ॥ ७ ॥

आनन्दतीर्थमुनीन्द्रकृता हरिगीतिरियं परमादरतः ।
परलोकविलोकनसूर्यनिभा हरिभक्तिविवर्धनशौण्डतमा ॥ ८ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीद्वादशस्तोत्रे पञ्चमोऽध्यायः ॥

★★★

## षष्ठोऽध्यायः

मत्स्यकरूप लयोदविहारिन् वेदविनेत्र चतुर्मुखवन्द्य ।
कूर्मस्वरूपक मन्दरधारिन् लोकविधारक देववरेण्य ॥ १ ॥

सूकररूपक दानवशत्रो भूमिविधारक यज्ञवराङ्ग ।
देव नृसिंह हिरण्यकशत्रो सर्वभयान्तक दैवतबन्धो ॥ २ ॥

वामन वामन माणववेष दैत्यवरान्तक कारणरूप ।
राम भृगूद्वह सूर्जितदीप्ते क्षत्रकुलान्तक शम्भुवरेण्य ॥ ३ ॥

राघव राघव राक्षसशत्रो मारुतिवल्लभ जानकिकान्त ।
देवकिनन्दन सुन्दररूप रुग्मिणिवल्लभ पाण्डवबन्धो ॥ ४ ॥

देवकिनन्दन नन्दकुमार वृन्दावनाञ्चन गोकुलचन्द्र ।
कन्दफलाशन सुन्दररूप नन्दितगोकुलवन्दितपाद ॥ ५ ॥

इन्द्रसुतावक नन्दकहस्त चन्दनचर्चित सुन्दरिनाथ ।
इन्दीवरोदरदलनयन मन्दरधारिन् गोविन्द वन्दे ॥ ६ ॥

चन्द्रशतानन कुन्दसुहास नन्दितदैवतानन्दसुपूर्ण ।
दैत्यविमोहक नित्यसुखादे देवसुबोधक बुद्धस्वरूप ॥ ७ ॥

दुष्टकुलान्तक कल्किस्वरूप धर्मविवर्धन मूलयुगादे ।
नारायणामलकारणमूर्ते पूर्णगुणार्णव नित्यसुबोध ॥ ८ ॥

आनन्दतीर्थमुनीन्द्रकृता हरिगाथा पापहरा शुभा
नित्यसुखार्था ॥ ९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीद्वादशस्तोत्रे षष्ठोऽध्यायः ॥



## सप्तमोऽध्यायः

विश्वस्थितिप्रलयसर्गमहाविभूति-
वृत्तिप्रकाशनियमावृतिबन्धमोक्षाः ।
यस्या अपाङ्गलवमात्रत ऊर्जिता सा
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ १ ॥

ब्रह्मेशशक्ररविधर्मशशाङ्कपूर्व-
गीर्वाणसन्ततिरियं यदपाङ्गलेशम् ।
आश्रित्य विश्वविजयं विसृजत्यचिन्त्या
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ २ ॥

धर्मार्थकामसुमतिप्रचयाद्यशेष-
सन्मङ्गलं विदधते यदपाङ्गलेशम् ।

आश्रित्य तत्प्रणतसत्प्रणता अपीड्या
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ३ ॥

षड्वर्गनिग्रहनिरस्तसमस्तदोषा
ध्यायन्ति विष्णुमृपयो यदपाङ्गलेशम् ।
आश्रित्य यानपि समेत्य न याति दुःखं
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ४ ॥

शेषाहिवैरिशिवशक्रमनुप्रधान-
चित्रोरुकर्मरचनं यदपाङ्गलेशम् ।
आश्रित्य विश्वमखिलं विदधाति धाता
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ५ ॥

शक्रोग्रदीधितिहिमाकरसूर्यसूनु-
पूर्वं निहत्य निखिलं यदपाङ्गलेशम् ।
आश्रित्य नृत्यति शिवः प्रकटोरुशक्तिः
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ६ ॥

तत्पादपङ्कजमहासनतामवाप
शर्वादिवन्द्यचरणो यदपाङ्गलेशम् ।
आश्रित्य नागपतिरन्यसुरैर्दुरापां
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ७ ॥

नागारिरुग्रबलपौरुष आप विष्णो-
र्वाहत्वमुत्तमजवो यदपाङ्गलेशम् ।
आश्रित्य शक्रमुखदेवगणैरचिन्त्यं
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ८ ॥

आनन्दतीर्थमुनिसन्मुखपङ्कजोत्थं
साक्षाद्रमाहरिमनःप्रियमुत्तमार्थम् ।
भक्त्या पठत्यजितमात्मनि सन्निधाय
यः स्तोत्रमेतदभियाति तयोरभीष्टम् ॥ ९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीद्वादशस्तोत्रे सप्तमोऽध्यायः ॥

★★★

## अष्टमोऽध्यायः

वन्दिताशेषवन्द्योरुवृन्दारकं
चन्दनाचर्चितोदारपीनांसकम् ।
इन्दिराचञ्चलापाङ्गनीराजितं
मन्दरोद्धारिवृत्तोद्भुजाभोगिनम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ १ ॥

सृष्टिसंहारलीलाविलासाततं
पुष्टषाड्गुण्यसद्विग्रहोल्लासिनम् ।
दुष्टनिश्शेषसंहारकर्मोद्यतं
हृष्टपुष्टानुशिष्टप्रजासंश्रयम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ २ ॥

उन्नतप्रार्थिताशेषसंसाधकं
सन्नतालौकिकानन्ददश्रीपदम् ।
भिन्नकर्माशयप्राणिसम्प्रेरकं
तन्न किं नेति विद्वत्सु मीमांसितम् ।

प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ ३ ॥

विप्रमुख्यैः सदा वेदवादोन्मुखैः
सुप्रतापैः क्षितीशेश्वरैश्चार्चितम् ।
अप्रतर्क्योरुसंविद्गुणं निर्मलं
सप्रकाशाजरानन्दरूपं परम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ ४ ॥

अत्ययो यस्य केनापि न क्वपि हि
प्रत्ययो यद्गुणेषूत्तमानां परः ।
सत्यसङ्कल्प एको वरेण्यो वशी
मत्यनूनैः सदा वेदवादोदितः ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ ५ ॥

पश्यतां दुःखसन्ताननिर्मूलनं
दृश्यतां दृश्यतामित्यजेशार्चितम् ।
नश्यतां दूरगं सर्वदाऽप्यात्मगं
वश्यतां स्वेच्छया सज्जनेष्वागतम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ ६ ॥

अग्रजं यः ससर्जाजमग्र्याकृतिं
विग्रहो यस्य सर्वे गुणा एव हि ।
उग्र आद्योऽपि यस्यात्मजाग्र्यात्मजः
सद्गृहीतः सदा यः परं दैवतम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ ७ ॥

अच्युतो यो गुणैर्नित्यमेवाखिलैः
प्रच्युतोऽशेषदोषैः सदा पूर्तितः ।
उच्यते सर्ववेदोरुवादैरजः स्वर्चितो ब्रह्मरुद्रेन्द्रपूर्वैः सदा ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ ८ ॥

धार्यते येन विश्वं सदाऽजादिकं
वार्यतेऽशेषदुःखं निजध्यायिनाम् ।
पार्यते सर्वमन्यैर्न यत्पार्यते
कार्यते चाखिलं सर्वभूतैः सदा ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ ९ ॥

सर्वपापानि यत्संस्मृतेः सङ्क्षयं
सर्वदा यान्ति भक्त्या विशुद्धात्मनाम् ।
शर्वगुर्वादिगीर्वाणसंस्थानदः
कुर्वते कर्म यत्प्रीतये सज्जनाः ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ १० ॥

अक्षयं कर्म यस्मिन्परे स्वर्पितं
प्रक्षयं यान्ति दुःखानि यन्नामतः ।
अक्षरो योऽजरः सर्वदैवामृतः
कुक्षिगं यस्य विश्वं सदाऽजादिकम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ ११ ॥

नन्दितीर्थोरुसन्नामिनो नन्दिनः
सन्दधानाः सदानन्ददेवे मतिम् ।

मन्दहासारुणापाङ्गदत्तोन्नतिं
नन्दिताशेषदेवादिवृन्दं सदा ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ १२ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीद्वादशस्तोत्रे अष्टमोऽध्यायः ॥

★★★

## नवमोऽध्यायः

अतिमत तमोगिरिसमितिविभेदन
पितामहभूतिद गुणगणनिलय ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ १ ॥

विधिभवमुखसुरसततसुवन्दित
रमामनोवल्लभ भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ २ ॥

अगणितगुणगणमयशरीर हे
विगतगुणेतर भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ ३ ॥

अपरिमितसुखनिधिविमलसुदेह हे
विगतसुखेतर भव मम शरणम् ।

शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ ४ ॥

प्रचलितलयजलविहरण शाश्वत
सुखमय मीन हे भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ ५ ॥

सुरदितिजसुवलविलुलितमन्दर-
धरवरकूर्म हे भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ ६ ॥

सगिरिवरधरातलवह सुसूकर
परम विवोध हे भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ ७ ॥

अतिवलदितिसुतहृदयविभेदन
जय नृहरेऽमल भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ ८ ॥

वलिमुखदितिसुतविजयविनाशन
जगदवनाजित भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ ९ ॥

अविजितकुनृपतिसमितिविखण्डन
रमावर वीरप भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ १० ॥

खरतरनिशिचरदहन परामृत
रघुवर मानद भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ ११ ॥

सुललिततनुवर वरद महाबल
यदुवर पार्थप भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ १२ ॥

दितिसुतमोहन विमलविबोधन
परगुण वुद्ध हे भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ १३ ॥

कलिमलहुतवह सुभग महोत्सव
शरणद कल्कीश हे भव मम शरणम् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ १४ ॥

अखिलजनिविलय परसुखकारण
परपुरुषोत्तम भव मम शरणम् ।

शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ १५ ॥

इति तव नुतिवरसततरतेर्भव
सुशरणमुरुसुखतीर्थमुनेर्भगवन् ।
शुभतमकथाशय परम सदोदित
जगदेककारण राम रमारमण ॥ १६ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीद्वादशस्तोत्रे नवमोऽध्यायः ॥

★★★

## दशमोऽध्यायः

अवन श्रीपतिरप्रतिरधिकेशादिभवादे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १ ॥

सुरवन्द्याधिप सद्वर भरिताशेपगुणालम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ २ ॥

सकलध्वान्तविनाशक परमानन्दसुधाहो ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ३ ॥

त्रिजगत्पोत सदार्चितचरणाशापतिधातो ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ४ ॥

त्रिगुणातीत विधारक परितो देहि सुभक्तिम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ५ ॥

शरणं कारण भावन भव मे तात सदाऽलम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ६ ॥

मरणप्राणद पालक जगदीशाव सुभक्तिम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ७ ॥

तरुणादित्यसवर्णकचरणाब्जामलकीर्ते ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ८ ॥

सलिलप्रोत्थसरागकमणिवर्णोच्चनखादे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ९ ॥

खजतूणीनिभपावनवरजङ्घामितशक्ते ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १० ॥

इभहस्तप्रभशोभनपरमोरुस्थलमाले ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ ११ ॥

असनोत्फुल्लसुपुष्पकसमवर्णावरणान्ते ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १२ ॥

शतमोदोद्भवसुन्दरवरपद्मोत्थितनाभे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १३ ॥

जगदागूहकपल्लवसमकुक्षे शरणादे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १४ ॥

जगदम्बामलसुन्दरगृहवक्षोवरयोगिन् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १५ ॥

दितिजान्तप्रदचक्रदरगदायुग्वरबाहो ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १६ ॥

परमज्ञानमहानिधिवदनश्रीरमणेन्दो ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १७ ॥

निखिलाघौघविनाशक परसौख्यप्रददृष्टे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १८ ॥

परमानन्दसुतीर्थमुनिराजो हरिगाथाम् ।
कृतवान्नित्यसुपूर्णकपरमानन्दपदैषी ॥ १९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीद्वादशस्तोत्रे दशमोऽध्यायः ॥

★★★

## एकादशोऽध्यायः

उदीर्णमजरं दिव्यममृतस्यन्द्यधीशितुः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ १ ॥

सर्ववेदपदोद्गीतमिन्दिरावासमुत्तमम् ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ २ ॥

सर्वदेवादिदेवस्य विदारितमहत्तमः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ३ ॥

उदारमादरान्नित्यमनिन्द्यं सुन्दरीपतेः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ४ ॥

इन्दीवरोदरनिभं सुपूर्णं वादिमोहदम् ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ५ ॥

दातृ सर्वामरैश्वर्यविमुक्त्यादेरहो वरम् ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ६ ॥

दूराद्दूरतरं यत्तु तदेवान्तिकमन्तिकात् ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ७ ॥

पूर्णसर्वगुणैकार्णमनाद्यन्तं सुरेशितुः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ८ ॥

आनन्दतीर्थमुनिना हरेरानन्दरूपिणः ।
कृतं स्तोत्रमिदं पुण्यं पठन्नानन्दतामियात् ॥ ९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीद्वादशस्तोत्रे एकादशोध्यायः ॥

★★★

## द्वादशोऽध्यायः

आनन्द मुकुन्द अरविन्दनयन ।
आनन्दतीर्थपरानन्दवरद ॥ १ ॥

सुन्दरीमन्दिर गोविन्द वन्दे ।
आनन्दतीर्थपरानन्दवरद ॥ २ ॥

चन्द्रसुरेन्द्रसुवन्दित वन्दे ।
आनन्दतीर्थपरानन्दवरद ॥ ३ ॥

चन्द्रकमन्दिरनन्दक वन्दे ।
आनन्दतीर्थपरानन्दवरद ॥ ४ ॥

वृन्दारकवृन्दसुवन्दित वन्दे ।
आनन्दतीर्थपरानन्दवरद ॥ ५ ॥

मन्दारसूनसुचर्चित वन्दे ।
आनन्दतीर्थपरानन्दवरद ॥ ६ ॥

इन्दिरानन्दक सुन्दर वन्दे ।
आनन्दतीर्थपरानन्दवरद ॥ ७ ॥

मन्दिरस्यन्दनस्यन्दक वन्दे ।
आनन्दतीर्थपरानन्दवरद ॥ ८ ॥

आनन्दचन्द्रिकास्यन्दक वन्दे ।
आनन्दतीर्थपरानन्दवरद ॥ ९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीद्वादशस्तोत्रे द्वादशोऽध्यायः ॥



श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# यमकभारतम्

ध्यायेत्तं परमानन्दं यन्माता पतिमयदपरमानन्दम् ।
उज्झितपरमानं दम्पत्याद्याद्याश्रमैः सदैव परमानन्दम् ॥ १ ॥

यस्य करालोऽलं चक्रं कालः परस्य हि करालोलम् ।
यस्य गदा पवमानः सन्यो व्यासोऽभवत्सदापवमानः ॥ २ ॥

यस्य रमा न मनोगं जगृहे विश्वम्भरापि नमनोऽगम् ।
यस्य पुमानानन्दं भुङ्क्ते यद्धाम कपतिमानानन्दम् ॥ ३ ॥

परमेषु यदातेजः परमेषु चकार वासुदेवो जः ।
मानधि बिभ्रत्सु मनो माऽनधिमाऽसीन्न वासुदेवोऽजः ॥ ४ ॥

सोऽजनि देवक्यन्ते यस्मादनुकम्पनाऽव देवक्यन्ते ।
अवदन्देव क्यं ते भुवनं हि सुराः सदैव देवक्यन्ते ॥ ५ ॥

नीतो वसुदेवेन स्वततेन स गोकुलं सुवसुदेवेन ।
तत्र यशोदा तनयं मेने कृष्णं स्वकीयमवदातनयम् ॥ ६ ॥

ववृधे गोकुलमध्याद्योदेवो विश्वमद्भुताकुलमध्यात् ।
तत्र च पूतनिकाया वधमकरोद्यन्निजाः सपूतनिकायाः ॥ ७ ॥

अधुनोच्छकटं लोली पादाङ्गुष्ठेन वातपेशशकटं लोली ।
अतनोद्रक्षामस्य स्वाज्ञानाद्गोपिका सदेरक्षामस्य ॥ ८ ॥

मुखलालनलोला तन्मुखगं जगदचष्ट सालनलोलातत् ।
नाध्यैन्मायामस्य जगत्प्रभोः स्वाधिकतततमायामस्य ॥ ९ ॥

तस्य सुखर्माण्यकरो दरिणो गर्गः सदुक्तिकर्माण्यकरोत् ।
अवदन्नामानमयं जगदादिं वासुदेवनामानमयम् ॥ १० ॥

तस्य सखा बलनामा ज्येष्ठो भ्राताऽथ यन्निजा बलना मा ।
यस्य च पर्यङ्कोऽयं पूर्वतनो विष्णुमजसपर्यङ्कोऽयम् ॥ ११ ॥

तेन हतो वातरयस्तृणचक्रो नाम दितिसतोऽवातरयः ।
हरमाणो बालतमं स्वात्मानं कण्ठरोधिनाऽबालतमम् ॥ १२ ॥

सोऽवनिमध्ये रङ्गन्नरिदरयुग्बालरूपमध्ये रङ्गन् ।
अमुषन्नवनीतमदः स्व गोकुलो गोपिकासुनवनीतमदः ॥ १३ ॥

तन्माता कोपमिता तमनुससारात्मवादवाकोपमिता ।
जगृहे सानमनं तं देवं तच्चिन्तयैव सानमनन्तम् ॥ १४ ॥

अथ सान्तरितामानं विष्णुं विश्वोद्भवं सदान्तरितामानम् ।
अनयद्दामोदरतां योऽरमयत्सुन्दरीं निजामोदरताम् ॥ १५ ॥

चक्रे सोऽर्जुननाशं प्राप्नोति यत्स्मृतिः सदार्जुनना शम् ।
तौ च गतौ निजमोकस्तेनैव नुतेन यन्निजानिजमोकः ॥ १६ ॥

अथ वृन्दावनवासं गोपाश्चक्रुर्जगत्क्षिताऽवनवासम् ।
तत्र बकासुरमारः शौरिरिभून्नित्यसंश्रितासुरमारः ॥ १७ ॥

अहनद्वत्सतनूकं योऽपाल्लोकं स्वयत्नवत्सतनूकम् ।
सोऽपाद्वत्सानमरः सहाग्रजो गोपवत्सवत्सानमरः ॥ १८ ॥

स विभुः श्रीमानहिके ननर्त यस्य श्रमानमा मा न हि के ।
अकरोन्नद्युदकान्तं कान्तं नीत्वोरगं स नाद्युदकान्तम् ॥ १९ ॥

हत्वा धेनुकमूढं बलात्प्रलम्बं च खेट् सधेनुकमूढम् ।
व्रजमावीदमृताशः पीत्वा वह्निं चरस्थिरादमृताशः ॥ २० ॥

गिरिणा रक्षापि कृता व्रजस्य तेन स्वरक्षरक्षापिकृता ।
शुक्राय व्यञ्जयता स्वां शक्तिं विश्वमात्मनाऽव्यं व्यञ्जयता ॥ २१ ॥

रेमे गोपीष्वरिहा स मन्मथाक्रान्तसुन्दरीपीष्वरिहा ।
पूर्णानन्दैकतनुः स विश्वरुक्पावनोऽप्यानन्दैकतनुः ॥ २२ ॥

अथ हतयोर्गलिकेश्योः श्वफल्कजप्रापितः पुरीं गलिकेश्योः ।
भङ्क्त्वा धनुराजवरं जघान तेनैव च स्वयं राजवरम् ॥ २३ ॥

मृद्नन्गाजमुग्रबलं सबलो रङ्गं विवेश सृतिमुग्रबलम् ।
हत्वा मल्लौ बलिनौ कंसं च विमोक्षितौ ततौ लौ बलिनौ ॥ २४ ॥

प्रादात्सान्दीपनये मृतपुत्रं ज्ञानदीपसान्दीपनये ।
गुर्वर्थेऽज्ञानतमःप्रभेदिता नित्यसम्भृताज्ञानतमः ॥ २५ ॥

जित्वा मागधराजं तोषितमकरोत्सदात्मयोगधराजम् ।
अनुकुर्वन्निजसदनं चक्रे रम्यं पुरं सुबोधनिजसदनम् ॥ २६ ॥

प्रसभं सगजबलस्य क्षत्रस्योच्चैः समगधराजबलस्य ।
मानं शिशुपालवरं हत्वा भैष्मीमवाप शिशुपालवरम् ॥ २७ ॥

हंसो डिभिकश्चपलावमुना संसूदितौ यवनकश्चपला ।
कीर्तिर्विमला विरता प्रतता विश्वाधिपावनीलाविरता ॥ २८ ॥

सत्या जाम्बवतीर्या भार्या विन्दाद्या भानुसाम्बवतीर्याः ।
प्रद्युम्नं मोदरतः प्राप ज्येष्ठं हरिः सुतं (स्व)मोदरतः ॥ २९ ॥

यत्परिवारतयेशा जाता देवा नृपात्मनाऽरतयेशाः ।
यद्भरितं विषसर्पप्रभृति ध्वान्तं न मारुतिं विषसर्प ॥ ३० ॥

येन हिडिम्बबकाद्या रक्षोधीशा निपातिता बबकाद्याः ।
भीमे प्रीतिममेयां व्यञ्जयता तेनैव शेषपाति ममेयाम् ॥ ३१ ॥

अथ कृष्णावरणेतान्प्राप्तान्राज्ञोऽशृणोत्सदावरणेतान् ।
द्रष्टुं यातः सबलस्तां चानैषीत्पृथासुतांस्ततः सबलः ॥ ३२ ॥

तानिन्द्रस्थलवासांश्चक्रे कृष्णः परो निजस्थलवासान् ।
स्वबलोद्रेचितमानैर्जुगोप धर्मं च तैः पराचितमानैः ॥ ३३ ॥

वालिवधानुनयाय प्रणयी सख्यं सुसन्दधे नु नयाय ।
वासवजेन विशेषात्तेनैव पुनर्नृजन्मजेन विशेषात् ॥ ३४ ॥

मातुः परिभवहान्यै राज्ञा द्युसदामितश्च परिभवहान्यै ।
अभवन्नरकमुरारिर्योऽवात्सीदत्समस्तनरकमुरारिः ॥ ३५ ॥

नीतो दिवि देववरै रेमे सत्यासमन्वितोऽदेववरैः ।
सर्वर्तुवने शशिना निशि सत्यां वासरे वनेऽशशिना ॥ ३६ ॥

सुरतरुमापालिमतात् प्रकाशयञ्छक्तिमात्मनः पालिमतात् ।
सुरवरवीरेषु दरी प्रधानजीवेश्वरः परेषुदरी ॥ ३७ ॥

परमभियायारिदरी दत्वा भद्रां पृथासुतायारिदरी ।
शक्रपुरीमभियातः प्रादाद्वह्वेर्वनं सतामभियाऽतः ॥ ३८ ॥

शिवभक्तप्रवराद्यं पुमान्न सेहे गिरि(री)शविप्रवराद्यम् ।
तं स्वात्मेन्द्रवरेण व्यधनोद्धीमेन धूतरुद्रवरेण ॥ ३९ ॥

यस्याज्ञाबलसारैः पार्थैर्दिग्भ्योहृतं धनं बलसारैः ।
जित्वा क्ष्मामविशेषां प्रसह्य भूपान्समस्तकामविशेषाम् ॥ ४० ॥

अथ पार्थान् क्रतुराजं प्रापयदमरेट् सरुद्रशक्रतुराजम् ।
पूजा तेनावापि छिन्नश्चैद्यः सृतिं गते नावापि ॥ ४१ ॥

निहतौ सौभकरूशौ शीतो भातश्च येन तौ भकरुशौ ।
अजयद्द्रुं च रणे बाणार्थेऽवनतिपतितकचन्द्रं चरणे ॥ ४२ ॥

असृजज्ज्वरमुग्रतमः क्षयप्रदो लीलयाऽधिवरमुग्रतमः ।
क्रीडामात्रं विश्वं प्रकाशयन्नात्मनः सविहरकमात्रं विश्वम् ॥ ४३ ॥

यस्यावेशोरुबलान् न्यहनत् पार्थोऽसुरान्प्रजेशोरुबलान् ।
वरदानादस्यैव जगत्प्रभोरीरणात्समनुगतनादस्यैव ॥ ४४ ॥

यस्यावेशात्सबलः प्रचकर्ष पुरं प्रसह्य चेशात्सबलः ।
कुरुपतिनाम नु यमुनाऽऽकृष्टा येनाहुरर्ह्यमतनु यमुना ॥ ४५ ॥

यद्बलवान्क्रोधवशान्निनाय नाशं वृकोदरः क्रोधवशान् ।
लेभेऽचान्यागम्यं स्थानं पुष्पाणि धाम चान्यागम्यम् ॥ ४६ ॥

यद्बलभारवहत्वान्नाचलदुरगादिभिः सुभारवहत्वात् ।
धर्मादरिहाऽपि पदं भीमो येनैव साहसं रिहाऽपि पदम् ॥ ४७ ॥

क्षात्रं धर्मं स्ववता गुरुवृत्त्यै केशवाज्ञया च चरमं स्ववता ।
सर्वं सेहे मनसा भीमेनेशैकमानिना हेमनसा ॥ ४९ ॥

यद्भक्तप्रवरेण प्रोतः स्वस्मिन्स कीचकः प्रवरेण ।
पतितास्तस्य सहायाः कृष्णार्थे मानिनः समस्य सहायाः ॥ ५० ॥

यद्भक्त्याऽनुगृहीतौ पार्थो भीमश्च गोनृपौ नु गृहीतौ ।
ऋणमुक्त्यै सुव्यत्यस्त्यै क्रमशो वीरावमुश्चतां सुव्यत्यस्त्यै ॥ ५१ ॥

यद्भक्त्याऽमितयाऽलं कृष्णा कार्ये विवेश कृष्णाकार्ये ।
यामीरार्धतनुत्वान्नापाद्भीमाद्दतेऽपि नापाद्भीमात् ॥ ५२ ॥

यां स्प्रष्टुमिच्छन्तमजातशत्रुं न्यवारयत्स्वस्थमजातशत्रुम् ।
शंरूपाने नित्यरतेरियं श्रीरिति स्म देवेड्यदितेरियं श्रीः ॥ ५३ ॥

मनसामनसाऽमनसा मनसा यमनन्तमजस्रमवेदनुया ।
विलयं विलयं विलयं विलयन्निखिलं त्वशुभं प्रचकार च यः ॥५४॥

सोऽगाद्दूतमुखेन प्रभुणेदं वर्तते यदूतमुखेन ।
पार्थार्थे बहुतनुतां यत्र प्रकाशयत्स्वयं सबहुतनुताम् ॥ ५५ ॥

गुरुकर्णनदीजादीनवधीच्चक्षुर्बलेन जनदीजादीन् ।
शक्त्या निजया परवान्स्वजनानुद्रेचयन्ननन्तयाऽपरवान् ॥ ५६ ॥

यस्य सुनीतिसहायान्न रिपून् मेनेऽर्जुनः समेतसहायान् ।
अकरोच्चासु परासुप्रततिं सेनासु धावनासुपरासु ॥ ५७ ॥

येन जयद्रथमारः पार्थः शत्रूनवापतद्रथमारः ।
यद्विरहादपि देहे सरथः शश्वत्स्थितेः सदादपि देहे ॥ ५८ ॥

यद्धरितो भरताभः प्रभुरं भाभावितोऽभिभरताभः ।
भीमो रभसाभिभवी प्रसभं भाभाभिभूर्भासा भिभवी ॥ ५९ ॥

यदनुग्रहिपूर्णत्वाद्भीमः सर्वानरीननहिपूर्णत्वात् ।
अदहद्बाहुवलेन क्रोधाग्रावाहितान्निजाहुबलेन ॥ ६० ॥

कृष्णाभीमाप्ततमः शीर्णं येन स्वकीयहृदयमाप्ततमः ।
धृतराष्ट्रसुतानवधीद्भीमेन स्थापितो मनसि सुसुतानवधीत् ॥ ६१ ॥

भीमविपाटितदेहानदर्शयत्स्वानरीन्विपाटितदेहान् ।
कृष्णाया हितकारी सम्यग्गीरप्रियः सदाऽहितकारी ॥ ६२ ॥

अथ हरिणाऽपीतबलं द्रौणेरस्त्रं महारिणा पीतबलम् ।
दधता वासोऽमरणं नीतं चक्रेऽभिमन्युजं सोमरणम् ॥ ६३ ॥

तस्य च रक्षा सुकृता जनार्दनेनेशशेषकेक्षासुकृता ।
पार्थेषु प्रेमवता नित्यं भर्त्राऽसुतासुविप्रेमवता ॥ ६४ ॥

ज्ञानं परमं प्रादाद्भीष्मगतः सृतिविमोक्षचरमं प्रादात् ।
पाण्डुसुतानामधिकं चक्रे वेदं गुणोत्तरं स्वनामधिकम् ॥ ६५ ॥

तेनावापि सुजातैर्हयमेधस्तुरगवर्तनेऽपि सुजातैः ।
पाण्डुसुतैः सवसूकैः प्राप्तैर्व्यासात्मना सुसवसूकैः ॥ ६६ ॥

तदनु सुपाण्डुतनूजै रेमे क्ष्मां पालयन् सुपाण्डुतनूजैः ।
अनुपमसखरूपोजः परमः श्रीवल्लभः सति खरूपोऽजः ॥ ६७ ॥

सुगतिं चरमामददान्निजयोग्यां ज्ञानिसुततिं परमामददात् ।
पार्थानां सयदूनां स पितृप्रेष्यादिनामिनां सयदूनाम् ॥ ६८ ॥

रेमे तत्रापि सुखी परमोऽनन्तो ननन्द तत्रापि सुखी ।
प्राणेनेन्दिरया च प्रयुतो नित्यं महागुणेन्दिरया च ॥ ६९ ॥

एवं सर्वाणि हरे रूपाणि श्रीपतेः सुपर्वाणिहरेः ।
पूर्णसुखानि सुभान्ति प्रततानि निरन्तराणि सुभान्ति ॥ ७० ॥

राम राम महाबाहो माया ते सुदुरासदा ।
वाद सादद को लोके पादावेव तवासजेत् ॥ ७१ ॥

जेत्सवातव वेदापाके लोकोदद सादवा ।
दासरादुसुतेयामाहोबाहा मम राम रा ॥ ७२ ॥

देवानां पतयो नित्यं मतं यस्य न जानते ।
तस्मै देव नमस्येऽहं भवतेऽसुरमारये ॥ ७३ ॥

समस्तदेवजनकवासुदेवपरामृत ।
वासुदेव परामृतज्ञानमूर्ते नमोऽस्तु ते ॥ ७४ ॥

देवादे देवलोकप पूर्णानन्दमहोदधे ।
सर्वज्ञेश रमानाथ देवादेऽदेऽव लोकप ॥ ७५ ॥

यो निर्ममेऽशेषपुराणविद्यां योनिर्ममे शेषपुराणविद्याम् ।
योऽनिर्ममेऽशेषपुराणविद्यां यो निर्ममेशे षपुराणविद्याम् ॥ ७६ ॥

अनन्तपारामितविक्रमेश प्रभो रमापारमनन्तपार ।
महागुणाढ्यापरिमेयसत्व रमालयाशेषमहागुणाढ्य ॥ ७७ ॥

भाभाभाभाभाभाभाभाभाभाभाभाभाभा ।
भाभाभाभाभाभाभाभाभाभाभाभाभाभा ॥ ७८ ॥

नैव परः केशवतः परमादस्मात्समश्च सुकेशवतः ।
सोऽयं शपथवरो नः शश्वत्सन्धारितः सुखपथवरोऽनः ॥ ७९ ॥

कृष्णकथेयं यमिता सुखतीर्थेनोदिताऽनेनेयं यमिता ।
भक्तिमता परमेशे सर्वोद्रेकात्सदा नुताऽऽप रमेशे ॥ ८० ॥

इति नारायणनामा सुखतीर्थसुपूजितः सुनारायणना मा ।
पूर्णगुणैरधिक पूर्णज्ञानेच्छाभक्तिभिः स्वधिकपूर्ण(ः) ॥ ८१ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं यमकभारतं सम्पूर्णम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता

# कन्दुकस्तुतिः (श्रीकृष्णपद्यम्)

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

अम्बरगङ्गाचुम्बितपादः पदतलविदलितगुरुतरशकटः ।
कालियनागक्ष्वेलनिहन्ता सरसिजनवदलविकसितनयनः ॥ १ ॥

कालघनालीकर्बुरकायः शरशतशकलितसुररिपुनिवहः ।
सन्ततमस्मान् पातु मुरारिः सततगसमजवखगपतिनिरतः ॥ २

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता कन्दुकस्तुतिः ॥
(श्रीकृष्णपद्यम्)

★★★

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# बिल्वमङ्गलः साधुः

★★★

कस्तन्त्रसारं सम्प्राप्य न स्यात् पर्याप्तवाञ्छितः ।
अमरैराश्रितच्छायं कल्पद्रुममिवोत्तमम् ॥ ७८ ॥

लोकानामवलोकाय मार्गस्यास्य व्यधाद् भवान् ।
करुणाकर नेत्राभे वादसन्मानलक्षणे ॥ ७९ ॥

एकाकी किल यश्चक्रे पदं मौलिषु विद्विषाम् ।
तत्त्वनिर्णयपार्थोऽयं केन नाम न पूज्यते ॥ ८० ॥

वादादयः प्रकरणस्फुलिङ्गास्तनवोऽप्यलम् ।
विपक्षकक्षं क्षिण्वन्ति मारुतेन त्वयेरिताः ॥ ८१ ॥

(-सुमध्वविजयः, पञ्चदशः सर्गः)

## शुद्धपत्रिका

| पृष्ठसङ्ख्या | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२ | १० | चक्रकापत्तिरथ वा | चक्रकापत्तिरथवा |
| २१ | २ | श्रुतिभिश्च | श्रुतिभ्यश्च |
| २१ | २१ | ज्ञानत्वं | ज्ञानत्वं च |
| २४ | १९ | इत्यादि श्रुतिः | इत्यादिश्रुतिः |
| ३३ | ४ | विरूपनित्यया | विरूप नित्यया |
| ३४ | १७ | अन्यथा शब्द | अन्यथाशब्द |
| ३५ | ५ | प्रयोजनम् | प्रयोजनं दृष्टम् । |
| ४६ | १५ | अण्व | अण्व्य |
| ४८ | २ | आगस्य | आगम्य |
| ५२ | १९ | इत्यदिवत् | इत्यादिवत् |
| ५३ | १२ | सादृश्याचे... | सादृश्याचै... |
| ६१ | ५ | ब्रह्माण्यभि | ब्रह्माण्यप्यभि |
| ६१ | १६ | प्रबेध | प्रबोध |
| ७४ | १४ | अद्वितीयं तत् | अद्वितीयं |
| ७६ | १२ | यास्य | यासु |
| ७९ | २० | खवन्तं | मखवन्तं |
| ८२ | १६ | अग्राई | अग्राइ |
| ८३ | ८ | समीपे दू... | समीपदू |
| ९१ | ११ | २ | १ |
| ९४ | २१ | लिङ्गा | लिङ्ग |

| | | | |
|---|---|---|---|
| ९९ | ६ | स्ववददध्यात् | स्ववदध्यात् |
| १०३ | १५ | सन्निवेदयन् | सन्निवेदयेत् |
| १०८ | ५ | शङ्कर | शङ्करः |
| ११३ | १० | पिबन्तिः | पिबन्ति |
| १२६ | १३ | तिष्टन्ति | तिष्ठन्ति |
| १३४ | ५ | प्रणाशनी | प्रणाशिनी |
| १३५ | ३ | अर्घ्यँ | अर्घ्यं |
| १३६ | १३ | परं ब्रह्म | परंब्रह्म |
| १४२ | ८ | कृद्ध.... | क्रुद्ध.... |
| १४८ | १२ | ....अङ्गुला | ....अङ्गुलं |
| १४९ | १५ | मास्तना... | मा स्तना... |
| १४९ | १६ | नाभेरासार्ध | नाभेरा सार्ध |
| १५२ | ११ | पार्श्वमाकर्णतः | पार्श्वमा कर्णतः |
| १५२ | १८ | त्र्यङ्गुलं | त्र्यङ्गुलौ |
| १५८ | २ | ....पक्षकैः | ....यक्षकैः |
| १६३ | २ | विधाननः | विधानतः |
| १६५ | १ | ...ष्षट् | ...ष्षड् |
| १७१ | ५ | रोचिः परि... | रोचिःपरि.... |
| १७४ | २१ | विद्या देव्यौ | विद्यादेव्यौ |
| १८२ | ४ | तप आद्याः | तपआद्याः |
| १८२ | १ | युक्तस्तु | युक्ता तु |
| १८३ | १५ | दश्र | दस्र |

# सर्वमूलग्रन्थाः

**Śrī Ānandatīrtha (Śrī Madhvāchārya) has composed 37 works. These are well planned to present Dvaita Vedānta thoughts.**

i) **दशप्रकरणानि (ten manuals) viz. तत्त्वसङ्ख्यान, तत्त्वविवेक, तत्त्वोद्योत, विष्णुतत्त्वविनिर्णय, प्रमाणलक्षण, कथालक्षण, कर्मनिर्णय, खण्डनत्रय.**
   **These introduce the basic terminology and the basic doctrines of Dvaita Vedānta.**

ii) **गीताभाष्य and गीतातात्पर्यनिर्णय. These two explain the dvaita doctrines enshrined in Bhagavadgita viz. विष्णुसर्वोत्तमत्त्व, जगत्सत्यत्व and पञ्चभेद.**

iii) **ब्रह्मसूत्रभाष्य, अणुभाष्य, ब्रह्मसूत्रानुव्याख्यान and न्यायविवरण. These give a critical exposition of Dvaita Vedānta doctrines presented in सूत्रप्रस्थान.**

iv) **महाभारततात्पर्यनिर्णय and भागवततात्पर्यनिर्णय. These constitute इतिहास पुराणप्रस्थान.**
   **These are the critical explanation of Mahābhārata and Bhāgavata.**

v) **ऋग्भाष्य This work gives philosophical import of about 40 hymns of ऋग्वेद.**

vi) **ईश-तलवकार-काठक-प्रश्न-आथर्वण-माण्डूक-तैत्तिरीय-ऐतरेय-बृहदारण्यक-छान्दोग्य- उपनिषद्भाष्याणि - Ten Principle Upaniṣadbhāṣyas.**

vii) **तन्त्रसारसङ्ग्रह – A work on worship and iconography and द्वादशस्तोत्र is a prayer of Supreme God of ten incarnations. यमकभारत is a summary of Mahābhārata in यमक metre.**

viii) **कृष्णामृतमहार्णव, सदाचारस्मृति, जयन्तीनिर्णय and यतिप्रणवकल्प These works explain religious practices and code of conduct.**

ix) **नरसिंहनखस्तुति, two verses describing the nails of नरसिंह as a priliminary to हरिवायुस्तुति.**
   **These works explains Dvaita Doctrines, Vaiṣṇava religion and ethics in a methodical way. These constitute the primary source of Dvaita Vedānta Philosophy.**

This volume contains Daśaprakaraṇas and Samkirṇa Granthas.


ISBN 9383679565